# तन्त्रसिद्धान्तरत्नावलिः

( पूर्वमीमांसाप्रकरणग्रन्थः )



पं० अ० चिन्नस्वामिशास्त्री

BY

MAHAMAHOPADHYAYA, SASTRARATNAKARA, MIMAMSAKESARI,
PANDITASARVABHAUMA

PANDIT A. CHINNASWAMI SASTRI,

PRINCIPAL AND PROFESSOR
OF
VEDAS, MIMAMSA, DHARMASASTRA ETC.,
COLLEGE OF THEOLOGY,
BENARES HINDU UNIVERSITY.

Edited with Appendix
BY

PANDIT P. N. PATTABHIRAMA SASTRI,

MIMAMSA-NYAYA-SAHITYACHARYA, PROFESSOR OF MIMAMSA,
COLLEGE OF THEOLOGY,
BENARES HINDU UNIVERSITY.



PRINTED AT THE B. H. U. PRESS, BENARES.

1944




॥ श्रीः ॥

# तन्त्रसिद्धान्तरत्नावलिः

## ( पूर्वमीमांसाप्रकरणग्रन्थः )

काशीहिन्दूविश्वविद्यालयधर्मविज्ञानविद्यालयाध्यक्षैः, महामहोपाध्याय,
शास्त्ररत्नाकर, पण्डितसार्वभौम, मीमांसाकेसरि—
**पं० श्रीचिन्नस्वामिशास्त्रिमहोदयैः**
विरचिता टिप्पण्या संयोजिता च

काशीहिन्दूविश्वविद्यालयपूर्वमीमांसाध्यापकेन
मीमांसान्यायसाहित्याचार्येण
**पं० श्रीपट्टाभिरामशास्त्रिणा**
परिशिष्टेन संयोज्य संशोधिता

काशीहिन्दूविश्वविद्यालयीयमुद्रणालये मुद्रिता विजयताम् ।



मू० ३—०—० साधारण सं० | सं० २००१ | मू० ४—०—० विशिष्ट सं०



विश्वविख्यातवैदुष्यगुणप्रकर्षेभ्यो भारतमहाविभूतिभ्यः
जगन्नुतमतिवाग्विलासेभ्यः, कुलपति, आचार्यवर्य,
श्री सर्वेपल्लि राधाकृष्णमहोदयेभ्यः





सादरं, सबहुमानप्रेमोद्रेकं, सश्रद्धागौरवातिशयं,

समर्पयतीमामनवद्यां तन्त्रसिद्धान्तरत्नावलीम्

अ. चिन्नस्वामिशास्त्री

## ॥ समर्पणम् ॥

विश्वम्भरा भगवती यमसूत भाग्यैः
विश्वातिशायिमतिवैभववाग्विलासम् ।
विद्यावतां प्रभवतां गणनाप्रसङ्गे
प्राथम्यमावहति यः पुरुगौरवेण ॥१॥

कुन्देन्दुशङ्खस्फटिकावभासः
स्फीतो यशोराशिरुदन्वदन्ते ।
खेलत्यजस्रं गुणिबृन्दवन्द्यो
यस्य, क्षितौ नोपमितो गुणैर्यः ॥२॥

यो विश्वविद्यालयमेतमाप-
द्ग्रस्तं मुमूर्षुं प्रबलोपघातैः ।
आजीजिवत्स्फेष्ठतमात्मशक्त्या
प्रापूपुपत्प्राणपणेन चाऽपि ॥३॥

तस्मै विद्यावताराय श्रीराधाकृष्णयोगिने ।
रत्नावलिमिमां प्रेम्णा श्रद्धानम्रस्समर्पये ॥४॥

अ० चिन्नस्वामिशास्त्री ।

॥ श्रीः ॥

# ॥ सम्पादकीयम् ॥

निखिलकलाकलापस्यापि मूलभूतस्य वेदस्य निष्कृष्टवाक्यार्थवर्णन-व्याजेनाशेषपुरुषार्थरत्नाकरस्य भगवतो धर्मस्य वास्तविकं तत्त्वमवगमयितुं प्रवृत्तेयं द्वादशलक्षणी भगवती मीमांसा 'धर्मशास्त्रम्' 'वाक्यशास्त्रम्' इति च व्यपदिश्यमाना पवित्रतमस्य भारतवर्षस्य चिरन्तनं गौरवं सभ्यताञ्च समेधयितुं निर्विशेषं प्रवृत्तेष्वपि दर्शनेषु अनन्यादृशं स्थानम्, अनुपमं महत्वञ्चाबिभर्तीति न तिरोहितं समेषामपि विद्वद्विपश्चिमानाम्। अत एव वार्तिककाराः श्रीभट्टपादाः—'मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता' इत्यभिदधाना अस्या उपादेयतमत्वमभिव्यञ्जयन्ति। "स्वाध्यायोऽध्येतव्यः" इति श्रुतिरेव फलवत्कर्मावबोधाय स्वाध्यायाध्ययनकर्तव्यतां बोधयन्ती, अध्ययनानन्तरं स्नानं विदधत्, 'अधीत्य स्नायात्' इति स्मरणमपि बाधमाना स्वापेक्षितफलसिद्धये भगवतीमिमामेवापेक्षत इति कस्सन्दिहीतास्या उपादेयतमत्वे। मीमांसा हि नाम पूज्यो विचारः। पूज्यं सन्तमेनं विचारम् 'न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इत्युपदिशति भगवति श्रीकृष्णे को हि नाम नोपादद्यात्? अतश्च पूज्यतमेयं मीमांसाऽतिमात्रमुपचीयमाना सर्वतश्च लब्धप्रसरा भारतवर्षस्यानितरसाधारणं गौरवमभिवर्धयन्ती विलसति स्म प्राचीने काले। अत्र च प्रमाणम्-प्राचीनैरस्माकं पूर्वजैश्शबर-कुमारिल-मिश्र-सोमेश्वरखण्डदेवादिभिर्महाभागैरुच्चावचं विरचिता ग्रन्थराशय एव।

एवं गुणगणैरुपबृंहितापीयं कालस्य दौरात्म्यात्, लोकानामश्रद्धया, अध्येतॄणां बुद्धिमान्द्यात्, श्रौतकर्मानुष्ठातॄणां वाभावात् क्रमशोऽपचीयमानावयवा विलोक्यते साम्प्रतं जगत्तीतले। अत एव मदध्ययनावसरे पूज्यपादा मदाचार्यचरणास्सम्प्रार्थिता मया अन्यैश्च मत्सतीर्थ्यैः—'पूर्वजाः खलु कुशाग्रधिषणा दुरूहानपि पूर्वतन्त्रीयान्विषयान् बुद्धितैक्ष्ण्यादवगच्छन्तः, स्थाने स्थाने याज्ञिकैरनुष्ठीयमानश्रौतकर्मणामवलोकनेन तदीय-

पदार्थान् प्रत्यक्षीकुर्वन्तः तत्प्रचारैकतानमतयो भृशं श्रद्धया भगवतीमेनामधीयानास्तादृशान् नैकविधान ग्रन्थानरचन्, ये चास्माकं कोमलमतीनां कृतेऽत्यन्तं दुरवगाहाः। शास्त्रेऽस्मिन् प्रवेशायैव केवलं पञ्चषाणि हायनानि यापनीयानि भवन्ति, अनन्तरञ्च ग्रन्थग्रन्थिभेदिनां न्यायानां याथातथ्येन स्वरूपम्, इतस्ततस्तेषां सञ्चारसरणिञ्चावगन्तुमनल्पस्य समयस्यावश्यकता च भवति। एतन्मध्य एवात्र सञ्जातवैरस्योऽधीती एतदध्ययनाद्विरमति। एषैव चेद्रीतिरग्रेऽपि प्रसृता स्यात्, तर्ह्यध्येतृपुरुषाभावात् विलुप्तशाखानामिवास्या अपि मीमांसाया गतिरापतेत्। अतोऽल्पीयसैव कालेनाध्येतॄणां शास्त्रेऽस्मिन् यथा हि प्रवेशस्स्यात्, तथा कृतेऽध्येतारस्सञ्जातरुचय उपरिष्टात्प्रौढानां ग्रन्थानामध्ययने कामं प्रवर्तेरन्। न खल्वध्येतृपरम्परां विहायान्यः कश्चनोपायः शास्त्रपरिरक्षणस्य विद्यते। अतस्तदर्थं तादृशमेकं ग्रन्थरत्नं विरचनीयम्, यस्मिंश्च श्रौतपदार्थनिर्वचनपूर्वकं द्वादशाध्यायगता विषयाः, मीमांसकाभिमतप्रमेयभूताः पदार्थाः प्रमाणानि च सविशेषं सङ्ग्रहेण निबद्धानि स्युः, यस्य च प्रकरणग्रन्थस्याध्ययनेनात्यल्पीयसैव समयेन छात्राणां मीमांसागहने प्रवेशश्च सुकरस्स्यात्। तत्र च श्रीचरणा एवाधिकारिणः। अतः श्रीचरणैरेतादृशग्रन्थनिर्माणेन वयं सर्वेऽपि विद्यार्थिनोऽनुग्राह्याः, दीनदीना चेयं समुद्धरणीया' इति। तेऽपि शिष्यानुकम्पिनोऽस्माकं प्रार्थनां स्वीकृत्य, आपतत्स्वपि बहुष्वन्तरायेषु तान् दूरीकृत्य, अनिर्वर्णनीयं परिश्रमञ्चाविगणय्य **'तन्त्रसिद्धान्तरत्नावलिः'** इत्याह्वयमत्युत्तमं ग्रन्थमणिं सकरुणं प्रणीय तत्प्रकाशने मां न्ययूयुजन्; यश्च साम्प्रतं सम्मुद्र्य प्रकाशपथमानीयतेऽध्येतृवृन्दसौकर्याय।

मन्येऽहमिदानीमस्माकं भगवत्या मीमांसायाश्च पचेलिमस्य भाग्यस्यैव परिणामभूतोऽयं ग्रन्थमणिरिति। अस्मिंश्च ग्रन्थरत्ने सुखेन पूर्वतन्त्रप्रवेशाय यावतां विषयाणामत्यावश्यकता, ते सर्वेऽपि साकल्येन सङ्ग्रथिताः पूज्यपादैरतिसरलया सारगर्भितया च भाषया। एकैकस्याध्यायस्य ये ये मुख्यतमा विषयास्ते सोदाहरणं स्पष्टं निरूपिताः। उदाहरणघटकीभूताः श्रौतपदार्थास्सम्यग्विवृताः। मीमांसकाभिमतप्रमाणानां प्रमेयभूतपदार्थानाञ्च सप्रमाणं स्वरूपं प्रतिपादितम्। यस्मिंश्च विषये लिङर्थे, आर्थभावनायाम्, अन्यस्मिन्वा ग्रन्थकाराणां परस्परं प्रधानतमो मतभेदः, तत्र नामग्राहं

मतानि तानि सुविशदं स्पष्टीकृतानि । यत्र चाग्निहोत्रवाजपेयादिशब्दार्थ-विषये गड्डलिकाप्रवाहन्यायेन ग्रन्थकारैः पदार्थस्साधितः, तत्रौचित्यं किमिति साधीयस्या रीत्या विवेचनमपि कृतम् । यद्यपि न्यायप्रकाशार्थसङ्ग्रहमीमांसापरिभाषादयः कतिपये प्रकरणग्रन्थास्साम्प्रतमध्ययनपरम्परायां प्रचलिता वर्तन्ते, तथापि तेषु मीमांसापरिभाषाऽत्यन्तं लघुकाया प्राकरणिकपदार्थाववोधायापर्याप्तैव । अर्थसंग्रहश्च न्यायप्रकाशतोऽनतिरिक्त एव । न्यायप्रकाशोऽपि सहस्रसङ्ख्याकेष्वधिकरणेषु शतादपि न्यूनानामेवाधिकरणानां विषयान् क्वचित्समग्रतया क्वचिच्चोदाहरणतया निरूपयन् यावदपेक्षितप्राकरणिकपदार्थाववोधायापर्याप्त एव । तत्रापि मीमांसकाभिमतप्रमाणप्रमेयानां ज्ञानं न्यायप्रकाशतो दुर्लभमेव । न्यायप्रकाशमधीत्य वार्तिकभाट्टदीपिकादिप्रौढग्रन्थाध्ययनेन तद्विषयपरिज्ञानं दुष्करमित्यध्ययनावसरे मयानुभूतम् , साम्प्रतञ्चाध्यापनावसरेऽसकृदनुभूयते ।

प्रकृतोऽयं ग्रन्थमणिः दोषैरेतैर्विहीनः गुणैश्च समुपबृंहितः मीमांसागहनं प्रविविक्षूणां शास्त्रान्तराध्येतॄणाञ्च महत उपकाराय कल्पेत इति निश्चप्रचमभिधातुं शक्यते । ये च मीमांसां समग्रामध्येतुमभिलषन्ति, ये वादसीयप्राकरणिकपदार्थानवगत्य शास्त्रान्तराण्यध्येतुमीहन्ते, तेषामुभयेषामपि यथा वेयं "तन्त्रसिद्धान्तरत्नावलिः" पर्याप्ता, न तथा न्यायप्रकाशादिरिति स्वस्वानुभवैकसंवेद्यमिदम् । अतोऽयं दर्शनाध्येतॄणां व्याकरणसाहित्याधीतिनाञ्च पाठ्यक्रमे नियमेनाध्येयतया सन्निवेशमर्हति । तदर्थं तत्तद्विद्यालयीयपाठ्यनिर्धारणसमितिसदस्यास्सविनयं सम्प्रार्थ्यन्ते—पूरेवेमां मीमांसां सर्वतो लब्धप्रसरां विधातुं यथा चायं श्रेष्ठतमो ग्रन्थमणिरध्ययनपरम्परां प्रविशेत्तथा कुर्युरिति ।

प्रशस्ततमस्यास्य निर्माणे गुरुचरणानां नापरः कश्चन स्वकीयो लाभः, ऋतेऽधीतिनामुपकारात् । सति चैवं सर्वेऽपि विद्यार्थिनस्सानुरोधं निवेद्यन्ते—यदेनं ग्रन्थं सम्यगधीत्य मीमांसापदार्थपरिज्ञानप्रक्षालितमतयस्स्वीयं ज्ञानं विमलीकुर्युरिति । विश्वसिमि चैवं कृते पूज्यपादाः ग्रन्थनिर्माणेऽनुभूतं प्रभूतं परिश्रममविगणय्य सन्तुष्टान्तरङ्गा भवेयुरिति । वयमप्यकिञ्चनाः सानुग्रहं तैः कृतस्योपकारस्य तदैव प्रतिफलं सम्पादयेम, यदा हि ग्रन्थस्यास्य सम्यगध्ययनेन मीमांसायां सञ्जातव्युत्पत्तयो भवेम । अस्तु ! सर्वथा वयमधमर्णा गुरुचरणानां कृत इति निस्सङ्कोचमभ्युपगन्तव्यम् ।

गुरुचरणानामाज्ञया ग्रन्थस्यास्य संशोधनकार्यं यथाशक्ति निरवर्तयम् । मीमांसकाभिमतप्रमाणेषु प्रमेयेषु च भाट्टप्राभाकरयोः परस्परं विद्यमानमतभेदपरिज्ञानाय काञ्चन पट्टिकां ग्रन्थस्यान्ते समयोजयम् । तत्र तत्रोदाहरणाय विचाराय वा निर्दिष्टानां वाक्यानां यथोपलम्भं तत्तत्स्थानप्रकाशिकाञ्च सूचीं सन्न्यवेशयम् । सावधानं संशोधनकार्ये निर्वर्तितेऽपि मत्प्रमादात् यन्त्रालयप्रमादाद्वा तत्र तत्र सञ्जातान् दोषान् विस्मरन्तो विद्वन्मणयो मामनुगृह्णीयुरिति सप्रश्रयमभ्यर्थये । सूचीनिर्माणादिकार्ये साह्यमाचरितवद्भ्यः श्रीगुरुचरणानां भ्रातृचरणेभ्यः तिरुपतिसंस्कृतमहाविद्यालये मीमांसाध्यापकपदमलङ्कुर्वद्भ्यः मीमांसकविभूषण-**पं० रामनाथशास्त्रिमहोदयेभ्यः** बह्वीर्नतीस्समर्पये । कार्येऽस्मिन् नितान्तमुपकृतवते साम्प्रतं काशिकराजकीयसरस्वतीभवने साधूलालनुसन्धानविभागे वर्तमानाय मत्सुहृदे 'साहित्याचार्यसाहित्यशिरोमणि' **पं० श्री रामनाथदीक्षिताय** नैकशो हार्दिकान् धन्यवादान् वितरन्, अन्ते—

सज्जनान् कवि (गुरु)रसौ न याचते ह्लादनाय शशभृत्किमर्थितः ।
नैव निन्दति खलान्मुहुर्मुहुः धिक्कृतोऽपि न हि शीतलोऽनलः ॥

इत्याचार्याभिनवगुप्तोक्तनीत्या सज्जनप्रशंसां दुर्जननिन्दां वाऽनपेक्षमाणा अस्मदुपकारायैव केवलमत्युत्तममिमं ग्रन्थं ये निरमासत, तेभ्यः **श्रीगुरुचरणेभ्य**शिशष्यानुकम्पिभ्योऽन्यत्किमपि समुपहर्तुमनीशानस्तेषां चरणनलिनयोः कोटिशस्साष्टाङ्गं प्रणतीस्समर्पयन् विरमामि ।

वाराणसी २७-८-४४.
भाद्र कृष्ण ८.
२००१ वै० सं०

*विद्वज्जनवशंवदः*
**पी० एन्० पट्टाभिरामशास्त्री**

## ॥ विषयसूची ॥

# तन्त्रसिद्धान्तरत्नावल्युद्धृतग्रन्थग्रन्थकाराणां सूची

# शुद्धिपत्रिका

| पृ० | पं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ५ | १३ | खाभिलषित | स्वाभिलषित |
| ९ | २५ | सुचौ | स्रुचौ |
| ११ | ४ | भतुविमर्हति | भवितुमर्हति |
| १३ | ७ | मन्ममु० | मन्त्रमुच्चा० |
| १६ | ९ | गुणावाचकत्वं | गुणवाचकत्वम् |
| " | २१ | ऽग्नींषोमीय | ऽग्नीषोमीय |
| २० | २३ | अमावास्यानन्तरपदि | अमावास्यानन्तरप्रतिपदि |
| २२ | १७ | श्रतिविरोधात् | श्रुतिविरोधात् |
| २७ | १० | विध्यार्थवादयोः | विध्यर्थवादयोः |
| ३० | ८ | स्रवादि | स्रुवादि |
| ३३ | २५ | ऽषिकल्पकम् | ऽविकल्पकम् |
| ४५ | १३ | अभिज्ञन्तो | अभिव्यञ्जयन्तो |
| ४८ | १२ | तन्तुरीयसं० | तन्तुतुरीसं० |
| ४९ | २५ | पाकजन्यौदनागत | पाकजन्यौदनावगता |
| ५१ | २५ | तत्त | तत्र |
| ७० | १३ | श्रत | श्रुत |
| ८८ | २ | यिश्वजिता | विश्वजिता |
| ९० | ८ | ऽववोधयन्ति | ऽवबोधयन्ति |
| ९१ | २२ | पिङ्गद्यकहाय० | पिङ्गद्यैकहाय० |
| ९६ | २५ | अस्यन्मते | अस्मन्मते |
| १११ | २२ | पकर्वति | प्रकर्षति |
| ११२ | १४ | त्यनेनाऽग्नेय | त्यनेनाऽऽग्नेय |
| ११६ | २२ | चरमश्रतस्य | चरमश्रुतस्य |
| ११८ | १ | सोऽव्ययाग | सोऽव्यक्तयाग० |
| " | १६ | अर्थसिद्धं | अर्थसिद्धं |
| १२० | १ | पदार्थन्तरस्य | पदार्थान्तरस्य |
| १३२ | २१ | श्रतौ | श्रुतौ |

॥ श्रीः ॥

नमश्शिवाभ्याम्

महामहोपाध्यायश्रीचिन्नस्वामिशास्त्रिभिः प्रणीता

# तन्त्रसिद्धान्तरत्नावलिः



नीलाम्भोरुहकान्तिकान्तमनिशं क्षीराब्धिकन्यालस-
दृक्षोभ्यन्तरमम्बुजासिदगदाचक्रानुरज्यद्भुजम् ।
भक्ताभीष्टदमब्जताम्रनयनं भक्त्या महापूरुषं
वन्दे यज्ञमयं विरिञ्चिमुखैर्बर्हिर्मुखै राधितम् ॥ १ ॥
नत्वा गुरून् महाभागान् नित्यं शिष्यानुकम्पिनः ।
ग्रथ्नामि तन्त्रसिद्धान्तरत्नावलिमिमां मुदा ॥ २ ॥

इह खलु परमर्षिर्भगवान् जैमिनिराचार्यः "अथाऽतो धर्मजिज्ञासे"-त्यादिभिः "अन्वाहार्ये च दर्शनात्" इत्यन्तैः सूत्रजालैर्द्वादशलक्षणीं धर्ममीमांसां प्रणिनाय ।

## स्वाध्यायविधिविचारः

"स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिना ह्युपनीताधिकारस्थेन विधिवदुपनीतेन त्रैवर्णिकेन माणवकेन स्वकुलपरम्परागता शाखाऽध्येतव्यत्वेन विधीयते । तच्चाऽध्ययनं यद्यपि सकृद्गुरुमुखोच्चारणानूच्चारणमात्रे

---

१ See विवरणप्रमेयसङ्ग्रह सू० १ व २ P. 400 अच्युतग्रन्थमाला-सीरीज—स्वाध्यायोऽध्येतव्य इत्यत्र स्वशाखा स्वाध्यायशब्देनोच्यते ।

पर्यवस्यति, तथापि विधेः तावन्मात्रार्थत्वे केवलादृष्टार्थत्वापत्तेरवघात[1]-न्यायेन यावत्कण्ठस्थीकरणमध्ययनविधिरनुधावति—अध्ययनेन स्वाध्याय-मात्मीयां शाखां हृद्गतत्वेन प्राप्नुयादिति[2]। तावताऽपि च तद्दोषापरिहारात्, विधिश्रुतेः पुरुषार्थपर्यवसायित्वनियमाच्च अर्थज्ञानपर्यन्तत्वमध्ययनविधे-रवसीयते—स्वाध्यायाध्ययनेन फलवदर्थावबोधं भावयेदिति। एवञ्चोपनीतो माणवकः गुरुमुखाद्वेदवाक्यानि यथावदधीत्य तैस्तत्तत्क्रत्वनुष्ठानोपयि-कार्थज्ञानं सम्पादयेदिति फलितोऽर्थः। यद्यपि **"षडङ्गो वेदोऽध्येतव्य"** इति साङ्गस्यैव वेदस्याऽध्ययनविधानात् तादृशाध्ययनसमय एव माणव-कस्य गृहीतपदपदार्थसङ्गतिकत्वात्, आपाततोऽर्थप्रतीतिर्भवतीति नाऽर्थो विधिना, तथाऽपि तादृशार्थज्ञानस्याऽनिर्णयात्मकस्याऽनुष्ठानानौपयिकत्वात् अनुष्ठानौपयिकं निर्णयात्मकमेवाऽर्थज्ञानं विधिनाऽऽक्षिप्यत इति विधिर-र्थवानेव। तादृशश्चाऽर्थज्ञानं विचारमन्तरा न सम्भवतीति स्वाध्यायविधिरेव स्वान्यथानुपपत्त्या विचारशास्त्रमाक्षिपतीति तत्सिद्ध्यर्थं विचारशास्त्रमारब्धं जैमिनिना। अत्र सूत्रे जिज्ञासापदेन विचारो लक्ष्यते। धर्मस्य जिज्ञासा धर्मजिज्ञासा। धर्मस्येति कर्मणि षष्ठी। विषयत्वं तदर्थः। सपरिकरो धर्मोऽत्र विषयः। कर्तव्या इति अध्याह्रियते। तथा च सूत्रस्याऽयमर्थः—अथ वेदाध्ययनानन्तरम्, अतः वेदाध्ययनस्य संवृत्तत्वाद्धेतोः, धर्मजिज्ञासा धर्म-विषयकविचारः कर्तव्य इति। अत्र धर्मपदमधर्मस्याऽप्युपलक्षणम्। अधर्मोऽपि हानाय जिज्ञासितव्य इति।

## धर्मलक्षणम्

तत्र धर्मस्वरूपज्ञानं विना प्रतिज्ञातो धर्मविचारो न सेत्स्यतीति तज्ज्ञानाय धर्मलक्षणमाह सूत्रकारः—**"चोदनालक्षणोऽर्थो धर्म"**

---

१ See पू० मी० २-१-२ for अवघातन्याय

२ उत्पत्त्याप्तिविकृतिसंस्कृतिरूपचतुर्विधभेदभिन्ने संस्कारे आप्तिसंस्कारोऽयं स्वाध्यायस्य।

इति । चुद सञ्चोदने इति धातोः युच्प्रत्यये कृते निष्पन्नः चोद्यते प्रेर्यते पुरुषः अनयेतिव्युत्पत्त्या चोदनाशब्दो विधिपरः,

**"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"**

इति वार्तिकोक्तेः । अथवा चोदनाशब्दो विध्यर्थवादमन्त्रनामधेयसाधारणो वेदमात्रपरः । सा, लक्ष्यते ज्ञाप्यते अनेनेति लक्षणं प्रमाणं यस्य स चोदनालक्षणः । अर्थः अनर्थसम्बन्धरहितः । एवञ्च वेदबोधितत्वे सति साक्षात् फलद्वारा वा यदनर्थाननुबन्धि इष्टसाधनञ्च तद्धर्मपदवाच्यमिति निर्गलितार्थः । उक्तं हि *वार्तिककृता*—

**फलतोऽपि च यत्कर्म नाऽनर्थेनाऽनुबध्यते ।**
**केवलप्रीतिहेतुत्वात् तद्धर्म इति गीयते ॥इति॥**

अत्र वेदबोधितत्वं वेदातिरिक्तप्रमाणेन स्वातन्त्र्येणाऽबोध्यत्वे सति वेदबोधितत्वम् । तेन स्मृत्यादिबोधितस्याऽपि धर्मत्वाक्षतिः । स्मृतीनां मन्वादिप्रणीतानां शिष्टाचारस्य च वेदमूलकत्वाङ्गीकारात् । अत्रापि धर्मपदमधर्मस्याऽप्युपलक्षकम् । अर्थपदमनर्थस्य । अतश्चाऽनर्थानुबन्धित्वे सति वेदबोधितत्वमधर्मत्वम् इत्यधर्मलक्षणं फलति ।

## धर्मस्वरूपविचारः

तच्च धर्मं प्रति विवदन्ते बहुविदः । तत्र विहितक्रियाजन्यः अपूर्वपदाभिधेयो लिङाद्यभिहितः कार्यनियोगाद्यपरपर्यायो धर्मः; एवं निषिद्धक्रियाजन्यस्तादृश एवाऽधर्म इति *प्राभाकराः* । विहितनिषिद्धक्रियाज-

---

१ संचोदनं प्रेरणम् । माधवाचार्यास्तु विवरणप्रमेयसंग्रहे 'चुद प्रेरणे' इत्येव पठन्ति See वि०प्र०सं० P.436 अ०सं० Benares.

२ See तन्त्रवार्तिक. P.3 चौ. edn.

न्यावेव पुण्यपापापरपर्यायौ आत्मगुणाविति *नैयायिका वैशेषिकाश्च*[1]। यागाद्यनुष्ठानजन्योऽन्तःकरणवृत्तिविशेष इति *साङ्ख्याः*[2]। ज्ञानान्तरेण ज्ञानान्तरजनिता वासना इति *बौद्धाः*[3]। शरीरान्तरारम्भकान् परमाणुविशेषान् पुद्गलशब्दवाच्यान् धर्मशब्देनाऽभिदधति *जैनाः*[4]। सर्वेष्वप्येषु धर्मशब्दप्रयोगः श्रुतौ न दृष्टः। न चैषां श्रेयस्साधनत्वं सम्भवति। उक्तं हि भगवता *वार्तिककारेण*—

> अन्तःकरणवृत्तौ वा वासनायाश्च चेतसः।
> पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि॥
> प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम्।
> पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः॥ इति॥

अपूर्ववासनादिस्वरूपमजानद्भिरपि लौकिकैः तत्तत्क्रियाकर्तर्येव धार्मिकाधार्मिकशब्दप्रयोगात्। यथोक्तं *भाष्यकारेण*—

**यो हि यागादिकमनुतिष्ठति, तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति।** अतश्च श्रेयस्साधनत्वादिना विहितनिषिद्धक्रिये यागादिब्रह्महत्यादिके एव धर्माधर्मपदवाच्ये इति सिद्धम्। इदमेव धर्मस्य लक्षणं स्वरूपञ्च। तत्र च प्रमाणानि—विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ।

---

१ See प्रशस्तपादभाष्य on वैशेषिकसूत्र। P. 128. L. 6 धर्मः पुरुषगुणः। See प्रशस्तपादभाष्य on वैशेषिकसूत्र P. 142. L. 4 Chow. ed. अधर्मोऽप्यात्मगुणः, also. वात्स्यायनभाष्य on गौतमसूत्र P.47.L. ।Chow. edn. अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ etc. Also see पराशरमाधवीय by माधवाचार्य P. 79 L. 2 A.S.B. edn..

२. See सांख्यकारिका. २३.

३. See. धम्मपद. Verse. 1. Poona edn.

४. See न्यायकुमुदचन्द्र P. 811. L. 4., प्रमेयक P. 243.

## विधिनिरूपणम्

### तत्र नैयायिकमतनिरूपणम्, तत्खण्डनं च

तत्र लिङ्लेट्लोट्तव्यप्रत्ययादिभिरभिधीयमानोऽर्थो विधिः। स चेष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वत्रितयरूपः। तत्र च विशेषणविशेष्यभावे विनिगमनाविरहात् प्रत्येकं लिङादेश्शक्तिः। व्युत्पत्तिवैचित्र्याच्चाऽर्थत्रयस्याऽपि युगपदेव बोधः। तज्ज्ञानमेव प्रवृत्तिं प्रति कारणम्। प्रवृत्तिकारणत्वाच्च प्रवर्तनाशब्देनाऽभिधीयत इति नैयायिकाः[1]। तन्न; इष्टसाधनत्वादीनामन्यलभ्यत्वेन लिङ्र्थत्वानुपपत्तेः, अनन्यलभ्यश्शब्दार्थ इति न्यायात्। तथा हि—

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिविधयो यागादिकं विदधानाः स्वविषयीभूते यागादौ पुरुषं प्रवर्तयन्ति। प्रवर्तमानश्च पुरुषः यावत् स्वप्रवृत्तिविषयीभूते यागादौ स्वाभिलषितफलसाधनत्वं नाऽवगच्छति तावन्न प्रवर्तते। तस्याऽप्रवृत्तौ विधेः प्रवर्त्तकत्वं न सिद्ध्यति, अप्रवर्तकत्वे च विधिरनर्थकस्सम्पद्यत इति विधिरेव स्वस्य प्रवर्तकत्वसिद्ध्यर्थं स्वविषयीभूतस्य यागादेः धात्वर्थस्येष्टसाधनत्वमाक्षिपति। सर्वाप्ततमो विधिरनर्थावहेऽकृतिसाध्ये च कर्मणि न कदाऽपि पुरुषं प्रवर्तयितुमीहेतेति विधिबलादेव बलवदनिष्टाननुबन्धित्वं, कृतिसाध्यत्वं चाऽऽक्षिप्यते। एवञ्च त्रितयस्याऽप्यन्यलभ्यत्वादेव न लिङादिबोध्यत्वम्।

### मीमांसकमते लिङर्थः

किन्तु प्रवर्तयितृपुरुषनिष्ठः, अयमत्र प्रवर्ततामित्याकारकः अभिप्रायविशेष एव लोके लिङर्थः। तत्र हि गामानयेति लिङादिघटितवाक्य-

---

१. See मुक्तावलि of विश्वनाथन्यायपञ्चानन in विधिनिरूपण P. 516. L. 1. N. S. edn. प्रवर्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः। etc.

श्रवणे 'अयं मां गवानयने प्रवर्तयति' इति श्रोताऽवगच्छति। तत्र तादृशबोधकारणजिज्ञासायां आवापोद्वापाभ्यां लिङादेरेव प्रवृत्त्यनुकूलव्यापारवाचित्वमध्यवसीयते। प्रेषणाज्ञादीनामपि पुरुषाशयविशेषरूपत्वमेव। सर्वेषामेषां लिङादिवाच्यत्वेऽपि न तेन तेन रूपेण लिङादिभिरभिधानम्। किन्तु प्रवृत्त्यनुकूलव्यापारत्वेनैव। एतादृशप्रवृत्त्यनुकूलव्यापारस्यैव मुख्यं प्रवर्तकत्वम्। तदाश्रयत्वात्तु पुरुषः प्रवर्तक इत्युच्यते।

## न्यायसुधाकृन्मतम्

तत्र वेदस्याऽकृतकत्वेन पुरुषसम्बन्धाभावात् तत्राऽऽज्ञादीनां पुरुषाशयविशेषाणामसम्भवात् "यजेत स्वर्गकाम" इति वाक्यश्रवणसमनन्तरं वेदस्थलिङादिप्रेरितोऽहं यागादिकं करोमि इत्यादिव्यवहारदर्शनाच्च वैदिकलिङादिनिष्ठः प्रवर्तनाप्रेरणापरपर्यायः पुरुषप्रवृत्त्यनुकूलव्यापारः कश्चित्कल्प्यते। स च पुरुषप्रवृत्तिभवनानुकूलत्वात् भावनेति वैदिकशब्दनिष्ठत्वाच्च शाब्दीभावनेति व्यवह्रियते। तथा च, लोकवेदसाधारण्येन व्यापारत्वमेकं शक्यतावच्छेदकीकृत्याऽनुकूलत्वादेस्संसर्गबललभ्यत्वमङ्गीकृत्य प्रवृत्त्यनुकूलव्यापार एव लोकवेदसाधारणः सामान्येन लिङर्थ इत्यभ्युपेयम्। विशेषलाभस्तु तत्तत्समभिव्यवहारलभ्य इति *न्यायसुधाकारः*।

## पार्थसारथिमिश्रमतम्

*पार्थसारथिमिश्रस्तु*—सर्वत्र प्रवृत्तिं प्रति इष्टसाधनत्वस्यैव कारणत्वावगमात् स्वसमभिव्याहृतधात्वर्थनिष्ठमिष्टसाधनत्वमेव प्रवृत्त्यनुकूलव्यापारत्वेन रूपेण लिङादिभिरभिधीयते। अथ वा नाऽत्राऽऽख्यातत्वांशेनाऽर्थभावनाऽभिधीयते। तदभिधाने फलान्वयाभावेन पुरुषप्रवृत्त्यनुदयात्। अतो लिङादिनिष्ठा अर्थभावनाभिधानानुकूला अभिधाख्या शक्तिरेव लिङादिभिरभिहिता प्रवृत्तिजनकत्वात् प्रवर्तनेत्युच्यते। तदुक्तं वार्तिके—

अभिधाभावनामाहुरन्यामेव लिङादयः। इति, 'लिङोऽभिधा सैव च शब्दभावना' इत्यनेनाऽपि तदेवोच्यते इति वदति ।

## शब्दभावनायां नव्यमतम्

नव्यास्तु—अन्यनिष्ठव्यापारबोधकत्वस्यैव शब्दस्वभावत्वात् स्वनिष्ठव्यापारबोधकत्वस्य क्वचिदप्यदर्शनात् अभिधायाः शक्तेः लिङ्वाच्यत्वकल्पने तद्विरोधात् उक्तशक्तेस्संख्याभिधानानुकूलया तया सह विनिगमनाविरहाच्च अलौकिको धर्मविशेष एव लिङादिनिष्ठः प्रवर्तनात्वेन लिङाद्यभिधेयः । स एव शाब्दीभावनापदाभिधेयः । तज्ज्ञानमेव प्रवृत्तिकारणमिति कथञ्चित्स्वीकार्यमिति प्राहुः ।

## विधेः प्रामाण्यनिरूपणम्

स च विधिः प्रमाणान्तराज्ञातालौकिकश्रेयस्साधनीभूतयागाद्यर्थविधायकत्वेन धर्मे प्रामाण्यमश्नुते । तादृशस्य यागादेरेव धर्मत्वस्य प्रागुक्तत्वात् । यद्यपि शब्दभावनाख्यविधिविषयत्वं वक्ष्यमाणायाः आर्थीभावनाया एवेति सैव विधेया, तथापि तस्या निरवच्छिन्नाया विधेयत्वासम्भवात् सा यमर्थमवच्छेदकतयोपादत्ते सोऽपि विधेय इति शास्त्रे व्यवहारः । अतश्च यागादेर्धात्वर्थस्य विधेयत्वमक्षतम् । न च यागादेः क्रियारूपत्वात्, क्रियायाश्च प्रत्यक्षेणाऽवगन्तुं शक्यत्वात् कथं प्रमाणान्तराज्ञातत्वमिति शङ्कनीयम् । न हि क्रियात्वेन रूपेण यागादीनां धर्मत्वम्, येन प्रत्यक्षगम्यता भवेत् । किन्तु अलौकिकश्रेयस्साधनत्वेन रूपेण । तच्च रूपं वैदिकशब्दाद्विना न केनाऽपि प्रमाणेनाऽवगन्तुं शक्यते । यथोक्तं वार्तिके—

तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ।
श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते ॥

---

१ See मीमांसाकौस्तुभ of खण्डदेव P. 21 Vol I chow. edn. प्रवर्तनाविशेषरूपो विधिप्रेरणानियोगापरनामधेयोऽलौकिको धर्मः स्थायी कल्प्यते etc.

**ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः । इति ।**

तदेतदग्रे निरूपयिष्यामः । अतश्च विधेरज्ञातार्थबोधकत्वेन सिद्धं प्रामाण्यम् । अत एव प्रमाणलक्षणमपि अनधिगताबाधितार्थविषयकत्वमेव मीमांसकाभिमतम् । न तु तार्किकमतवत् यथावस्थितार्थविषयकत्वमात्रम् । स्मृतेरपि प्रामाण्यापातात् । स्मृत्यनुवादयोर्निरासाय लक्षणे अनधिगतेति । भ्रमव्यावृत्त्यर्थमबाधितेति ।

## अर्थवादानां प्रामाण्यनिरूपणम्

अर्थवादानां विधेयार्थस्तावकत्वेन प्रामाण्यम् । तथाहि—"**वायव्यं श्वेतमालभेत भूतिकामः**" इत्यादिविधिसन्निधौ "**वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति**" इत्यादयः श्रूयन्ते । तेषां यद्यभिधावृत्त्या यथाश्रुतार्थपरत्वं, तदा सदसद्रूपसिद्धार्थबोधकत्वेन क्रियातत्सम्बन्धिबोधकत्वाभावात् क्रियातत्सम्बन्धिबोधकस्यैव वैदिकवचनस्य प्रथमपादे तद्भूताधिकरणे प्रामाण्याभ्युपगमात् अतदर्थानामर्थवादानां न प्रामाण्यं सिद्ध्यतीत्यप्रमाणमर्थवादास्स्युः ।

न चेष्टापत्तिः, '**स्वाध्यायोऽध्येतव्यः**' इत्यध्ययनविधिनाऽर्थवादादिसाधारण्येन वेदस्याऽऽत्मविषयीकृतत्वात् विधिविषयस्य च कस्याऽप्यानर्थक्यानुपपत्तेः । अतस्ते विध्यपेक्षितं प्राशस्त्यं प्रतिपादयन्ति । विधयो हि यं कञ्चनाऽर्थं विदधतः स्वविषये पुरुषं प्रवर्त्तयितुमीहमानाः तावन्मात्रेणाऽप्रवृत्तस्य पुरुषस्य प्रवृत्तिसम्पादनाय रुचिविशेषमुत्पादयितुं स्वविषयस्य स्तुतिमपेक्षन्ते । अर्थवादा अपि यथाश्रुतार्थमात्रप्रतिपादने प्रयोजनमलभमानाः विधिना सहैकवाक्यतां प्राप्य विधेयमर्थं स्तुवन्तः कृतार्थीभवन्ति, विधिकोट्यन्तर्भूता एव च प्रामाण्यं भजन्ते । अतो विधिस्तुत्योः नष्टाश्वदग्धरथवत्[1] सम्प्रयोगः । अतस्सिद्धमर्थवादानां विधेयधर्मस्तावकत्वेन प्रामाण्यम् ।

---

1 See व्याकरण महाभाष्य by पतञ्जलि for नष्टाश्वदग्धरथन्याय १.१.४९.

तत्र केचिदर्थवादा विधेयां क्रियां साक्षादेव स्तुवन्तः, केचिच्च तत्सम्बन्धिद्रव्यदेवतादिकं स्तुवन्तः प्रामाण्यं लभन्ते। तत्र फलविधिसदृशाः केचित् ये विधिवन्निगदा इत्युच्यन्ते। यथा—"**औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः ऊर्क् पशवः, ऊर्जैवाऽस्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुध्यै**" इत्यादयः। केचित् हेतुविधिसदृशाः, ये हेतुवन्निगदा इत्युच्यन्ते। यथा—"**शूर्पेण जुहोति, तेन ह्यन्नं क्रियते**" इति। एवं त्रैविध्यमर्थवादानाम्॥

प्रकारान्तरेणाऽपि त्रैविध्यमर्थवादानाम्। तद्यथा—

**विरोधे गुणवादस्स्यात् अनुवादोऽवधारिते।**
**भूतार्थवादस्तद्धानात् अर्थवादस्त्रिधा मतः॥ इति॥**

प्रमाणान्तरविरुद्धार्थबोधकत्वं यत्र स गुणवादः। यथा—"**स आत्मनो वपामुदक्खिदत् तामग्नौ प्रागृह्णात्**" इत्यादिः। स इति पूर्वप्रकृतः प्रजापतिः परामृश्यते। स सृष्ट्यादौ जगत् सिसृक्षुः तदर्थं कञ्चन यागमनुतिष्ठासुः तदानीं तत्साधनभूतद्रव्यस्य कस्य चिदभावात् स्वीयामेव वपां स्वोदरान्निष्कास्याऽग्नावजुहोत्। ततः शृङ्गरहितः पशुस्समभवत् इति प्रकृतवाक्यार्थः। तदिदं प्रत्यक्षविरुद्धम्। न हि कश्चिदात्मीयां वपां उत्खिद्य जुह्वत् ततो जीवन् दृष्टः। अतः प्रमाणान्तरविरुद्धत्वात् गुणवादोऽयम्। वपा नाम नाभिसमीपे आमाशयमावृत्य स्थितस्सूक्ष्मवस्त्राकारो मांसविशेषः। अनेन

---

१ मेदोवपावसानां प्राणिशरीरान्तर्वर्तिनां वस्तुविशेषाणामस्ति परस्परं भेदः। यथोक्तं प्राचीनैरभियुक्तैः—

मेदो हि सर्वभूतानां हृदयेऽस्थिषु च स्थितम्।
नाभेस्समीपदेशे तु शरीरान्तरवर्तिनी॥
हस्तमात्रा पटीरूपा वपां तां परिचक्षते॥ इति॥

अत एव श्रुतौ 'अभितो वपां जुहोति। मेदसा स्रुचौ प्रोर्णोति, पार्श्वेन वसाहोमं प्रयौति'. इति त्रयाणां पृथक् पृथक् विनियोग उक्तः। अतस्तानि परस्परं

प्रकृतः पशुयागः स्तूयते। आदौ सृष्टेः पूर्वमित्थं नाम पशूनामभाव आसीद् यत् प्रजापतिना स्ववपैवोत्खिद्य होतव्याऽऽसीत्। एतच्च तूपरपशुयागस्य सामर्थ्यं यत्तस्मिन्ननुष्ठितमात्र एव प्रजाः पशूंश्च स्रष्टुं प्रजापतिस्समर्थोऽभवदिति।

प्रमाणान्तराधिगतार्थविषयकं वचनमनुवादः। यथा—'**वायुर्वै क्षेपिष्ठा देवता**' इत्यादिः। क्षेपिष्ठा अतिशीघ्रगामिनी। अत्र वायोरतिशीघ्रगामित्वं लोकत एवाऽवगतम्। न तदर्थं वैदिकप्रमाणमन्वेष्टव्यम्। अतः प्रमाणान्तरज्ञातार्थकत्वादनुवादोऽयम्।

पूर्वोक्तोभयाभावो यत्र स भूतार्थवादः। यथा—'**इन्द्रो वृत्रमहन्**' इत्यादिः। यत्तु कैश्चित् द्वितीयतृतीययोः '**अग्निर्हिमस्य भेषजम्**' '**वज्रहस्तः पुरन्दर**' इत्युदाहृतं, तदयुक्तम्; अग्निरित्यस्य वज्रहस्त इत्यस्य च मन्त्रत्वेनाऽर्थवादत्वाभावात्। अर्थवादस्यैव ह्यनेन त्रैविध्यमुच्यते, न तु मन्त्रस्य। उपनिषदामपि मीमांसकमते तत्तद्विधिविहितकर्मानुष्ठातुरात्मनः नित्यत्वसर्वगतत्वादिनिरूपणद्वारा विध्यपेक्षितप्राशस्त्यप्रतिपादकत्वमेवेति तासां तृतीयविधायामेवाऽन्तर्भावः।

एवं '**बर्हिषि रजतं न देयम्**' '**तस्माद्ब्राह्मणस्सुरां न पिबति**' इत्यादिनिषेधसन्निधिपठितानां '**सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्**', '**सुरा वै मलव्यं**' इत्यादीनामर्थवादानां निषेध्यरजतदानादिनिन्दाद्वाराऽपेक्षिताप्राशस्त्यसमर्पणेन प्रयोजनवत्त्वं बोध्यम्। प्रमाणान्तरानधिगतताटशार्थबोधकत्वादेव तेषां प्रामाण्यमपीति बोध्यम्।

## मन्त्रप्रामाण्यनिरूपणम्

तत्तत्कर्मानुष्ठानकालेऽनुष्ठेयक्रियातदङ्गद्रव्यदेवतादिप्रकाशनद्वारा

---

भिन्नान्येव नैकरूपाणि। एवञ्च 'मेदस्तु वपा वसा' इति पदत्रयस्य पर्यायरूपत्वप्रदर्शनेनाऽर्थैकत्वमभिव्यञ्जितं यदमरसिंहेन तदनादरणीयम्।

मन्त्राणां प्रयोजनवत्त्वम् । तथा हि—**'स्मृत्वा कर्माणि कुर्वीत'** इत्यादि-विधिना तत्तत्कर्मणामनुष्ठानकाले स्मरणं विहितम् । तच्च स्मरणं यद्यप्यु-पायान्तरेणाऽपि भतुविमर्हति, तथाऽप्युपायान्तरपरिग्रहे तत्तत्प्रकरणपठि-तानां मन्त्राणामानर्थक्यप्रसङ्गात् स्वाध्यायविधिपरिगृहीतानां तेषामानर्थ-क्यानौचित्यात् प्रयोजनान्तरासम्भवाच्च मन्त्रैरेव स्मृत्वा कर्माणि कुर्यादिति नियमविधिरङ्गीक्रियते ।

न च तेषां केवलादृष्टार्थत्वमेवाऽस्तु, किमर्थप्रकाशनेनेति वाच्यम् । दृष्टे प्रयोजने सम्भवति अदृष्टकल्पनाया अन्याय्यत्वस्य मीमांसकसरणि-समायातत्वात् । एवञ्च तत्तदधिकाराख्यप्रकरणपठितानां तत्तन्मन्त्राणां तत्सहकृतश्रुत्यादिभिस्तत्तत्कर्माङ्गत्वेऽवगते सिद्धरूपाणां तेषां स्वरूपतोऽ-ङ्गत्वासम्भवेन मध्ये व्यापारापेक्षायां उच्चारणमात्रस्य व्यापारत्वकल्पने केवलादृष्टार्थत्वापत्त्या तदतिलङ्घ्य दृष्टरूपमर्थप्रकाशनमेव प्रयोजनं मुख्यतया कल्प्यते ।

ततश्च ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनरूपं प्रयोजनं सम्भवति तर्हि ते तत्रैव विनियुज्यन्ते । येषान्तु न सम्भवति, तेषां यत्र सम्भवति तत्र सामान्यसम्बन्धबोधकप्रमाणसत्त्वे उत्कर्षः । यथा—पूषानु-मन्त्रणमन्त्रस्य । दर्शपूर्णमासयोः पूषदेवताया अभावात्, यौगिकव्युत्प-त्त्याश्रयणे सर्वत्राऽतिप्रसङ्गात् । येषां सम्बन्धो नाऽस्ति प्रयोजनमपि नाऽन्यत्र सम्भाव्यते, तेषां प्रकरण एव लक्षणादिना विनियोगः । यथा **'त्वं ह्यग्ने प्रथमो मनोता'** इति मनोतामन्त्रस्य । अस्य ह्यग्नीषोमीयपशुप्रकरणे पाठात् तत्र केवलाग्निदेवताकस्य यागस्याऽभावात्, सामान्यसम्बन्धबोधक-प्रमाणाभावेनोत्कर्षस्याऽप्यसम्भवात् प्रकृत एवाऽग्नीषोमदेवताके कर्मणि अग्निपदेऽग्नीषोमलक्षणां कृत्वा विनियोगः ।

लक्षणाया अपि यत्राऽसम्भवः, सामान्यसम्बन्धबोधकप्रमाणमपि

नाऽस्ति, प्रकरणे च न मुख्यो लाक्षणिको वाऽर्थस्सम्भवति तेषां केवलादृष्टार्थत्वमेव। यथा—जपमन्त्राणाम्। ते ह्युच्चारणमात्रेण किञ्चनाऽदृष्टं जनयन्ति इत्युक्तं द्वादशे। शक्यते तत्रापि अर्थप्रकाशनरूपं दृष्टमेव प्रयोजनम्। अर्थप्रकाशनं परमदृष्टार्थमस्त्विति नवीनाः। हुंफडादीनान्तु अर्थाभावात् सर्वथा अदृष्टार्थत्वमेव तेषामगत्याऽङ्गीक्रियते। तद्व्यतिरिक्तानां तु सर्वेषामर्थप्रकाशनार्थत्वमेव।

साममन्त्राणान्तु स्वरसमाहाररूपाणामर्थाभावात् अर्थप्रकाशनप्रयोजनासम्भवेऽपि ऋगक्षराभिव्यक्तिरूपदृष्टप्रयोजनसम्पादकत्वमेव। अतश्च सति सम्भवे प्रयोगसमवेतार्थस्मारकत्वमेव मन्त्राणां सर्वसाधारणं प्रयोजनमिति सिद्धम्। यथोक्तं न्यायसुधायाम्—

सर्वसाधारणत्वेन विचारस्य प्रयोजनम्।
कर्मकालेऽनुसंधेयो मन्त्रार्थोऽर्थपरत्वतः ॥ इति ॥

## मन्त्रविभागः

ते च मन्त्रास्त्रिविधाः–करणमन्त्राः, क्रियमाणानुवादिमन्त्राः, अनुमन्त्रणमन्त्राश्चेति। तत्र पूर्वं मन्त्रमुच्चार्य्य तदन्ते यत्र कर्म क्रियते स **करणमन्त्रः**। यथा इषे त्वेत्यादिः। याज्यापुरोनुवाक्यादयश्च। यत्र मन्त्रोच्चारणसमकालमेव कर्माऽनुष्ठीयते स **क्रियमाणानुवादी** मन्त्रः। यथा **"युवा सुवासा"** इत्यादिः यूपपरिव्याणाङ्गभूतः। यूपपरिव्याणक्रिया हि दीर्घकालव्यासक्ता मन्त्रोच्चारणानन्तरं क्रियमाणा कदाचित् स्मृतिविच्छेदमाप्नुयादिति परिव्याणं मन्त्रोच्चारणं च युगपदेव क्रियते स्मृत्यविच्छेदाय। **परिव्याणं** वेष्टनम्।

---

१ See मीमांसाकौस्तुभ of खण्डदेव P. 71 L. 2—9 Chow-edn and भाट्टदीपिका by the same author P.32. L.3. N. S. edn.

ये तु कर्मानुष्ठानानन्तरं पठ्यन्ते तेऽनुमन्त्रणमन्त्राः। यथा— 'अग्नेरहं देवयज्ययाऽन्नादो भूयास' मित्यादयः। क्रियानुष्ठानमनु मन्त्र्यन्ते उच्चार्यन्ते इत्यनुमन्त्रणमन्त्राः। उपस्थानमन्त्राणां च करण-मन्त्रे क्रियमाणानुवादिमन्त्रे वाऽन्तर्भावः। अनुमन्त्रणमन्त्रस्यैव कश्चन विशेषोऽभिमन्त्रणमिति। इत्थं हि तेषां लक्षणम्—

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥
उद्देश्याभिमुखत्वे तु स्यात्तदेवाऽभिमन्त्रणम्।
उपस्थितिस्तु बोधस्स्यात् बोधान्तोच्चारणं जपः॥

उपस्थितिरुपस्थानम्॥ इति॥

## मन्त्रप्रामाण्याक्षेपस्तत्समाधिश्च

नन्वेतावता मन्त्राणां प्रयोजनवत्त्वमेव सिद्धम्। न तु प्रामाण्यम्। न चाऽनधिगतार्थगन्तृत्वलक्षणप्रामाण्याभावेऽपि याथार्थ्यलक्षणस्य तस्य सत्वात् प्रामाण्यं सम्भवत्येवेति वाच्यम्। अनधिगतार्थगन्तृत्वस्यैव मुख्य-प्रामाण्यलक्षणत्वेन मीमांसकैरङ्गीकारात्। अतश्च कथं मन्त्रप्रामाण्यसिद्धि-रिति चेत्—याथार्थ्यलक्षणप्रामाण्येनैव केचित् सन्तुष्टा भवन्ति। अन्ये तु पदार्थविधया प्रामाण्यमभ्युपगच्छन्ति। मीमांसकमते वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य कारणत्वमङ्गीकृतम्। उक्तं हि *भाष्यकारैः*—अथेदानीं पदार्था अवगतास्सन्तो वाक्यार्थं गमयन्ति इति। *वार्तिककारैरपि*—

पदार्थानान्तु मूलत्वं युक्तं तद्भावभावतः॥ इति॥

एवञ्च "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यादिश्रुतमन्त्रविनियोग-विधौ कल्पितविधौ वा मन्त्राणां पदार्थत्वेन मन्त्रविनियोजकवाक्यार्थप्रती-तिजनकत्वात् पदार्थविधया प्रामाण्यं युक्तमेवेति।

## भट्टसोमेश्वरमतम्

सोमेश्वरभट्टास्तु—अपूर्वसाधनीभूतलवनादौ स्वस्याऽङ्गत्वबोधकत्वेन, अश्रुतद्रव्यदेवतायागादिकल्पकत्वेन स्मार्त्तप्रपाद्यनुमापकत्वेन च मन्त्राणामनधिगतार्थबोधकत्वमेवेत्यभिदधति । यथोक्तं तैः—

अपूर्वसाधनत्वात्तु लवनादौ समीहिते ।
आत्मनोऽङ्गत्वबोधेन मन्त्रः प्रामाण्यमश्नुते ॥
अश्रुतद्रव्ययागादिकल्पनाच्च प्रमाणता ॥ इति ।

अतस्सिद्धं मन्त्राणामपि धर्मे प्रामाण्यम् ॥

## नामधेयप्रामाण्यनिरूपणम्

नामधेयानां विधेयार्थपरिच्छेदकत्वेन धर्मे प्रामाण्यम् । परिच्छेदश्चेतरव्यावृत्तिः । एवञ्च ज्योतिष्टोमादिशब्दाः नामधेयभूताः इतरेभ्यो यागहोमादिभ्यो व्यावर्त्तयन्ति स्वाभिधेयं यागहोमादिकमिति तेषां युक्तमेव धर्मे प्रामाण्यम् ।

ननु नामधेयानां पदरूपत्वेन कथं धर्मे प्रामाण्यम् ? पदमात्रस्य प्रामाण्यायोगात् । यतः—

पदमस्त्यधिकाभावात्स्मारकान्न विशिष्यते

इति चेत्, विधिवदेषां स्वातन्त्र्येण प्रामाण्याभावेऽपि विधेयार्थपरिच्छेदकत्वेन विध्येकवाक्यतया प्रामाण्यसम्भवात् । नचैवं विधिवाक्यप्रामाण्यनिरूपणेनैव नामधेयानामपि प्रामाण्यसिद्धेः पृथक्कथनमनर्थकमिति वाच्यम् । प्रकारभेदकथनार्थत्वात् पृथक् सङ्कीर्तनस्य ।

## नामधेयभेदाः

तच्च नामधेयत्वं निमित्तचतुष्टयात्—मत्वर्थलक्षणाभयात्, वाक्यभेदभयात्, तत्प्रख्यशास्त्रात्, तद्व्यपदेशाच्चेति ।

## मत्वर्थलक्षणाभयात् कर्मनामधेयता

तत्रोद्भिद्बलभिदादिशब्दानां कर्मनामधेयत्वं मत्वर्थलक्षणाभयात्। तथाहि—"**उद्भिदा यजेत पशुकाम**" इत्यत्रोद्भिच्छब्दस्य कर्मनामधेयत्वं यदि नाऽङ्गीक्रियते तदा उद्भिद्यते उत्पाद्यते भूमिरनेनेति व्युत्पत्त्या उद्भिच्छब्दस्य खनित्रादिरूपगुणवाचकत्वमङ्गीकृत्य तस्य च यागे दध्यादिवत् द्रव्यत्वेन विधिरङ्गीकार्यः। तादृशश्च यागो यद्यपि न कोऽपि सन्निहितः तथापि दूरस्थस्य ज्योतिष्टोमस्य कथञ्चिदुपस्थितिमङ्गीकृत्य तत्रैव गुणविधिरिति वक्तव्यम्। तन्न संभवति। तत्र '**सोमेन यजेते**'त्युत्पत्तिविधिनैव गुणस्य विहितत्वात् उत्पत्तिशिष्टगुणावरुद्धे तस्मिन् न गुणान्तरस्य प्रवेशस्संभवी। पशुकाम इति फलपदवैयर्थ्यं च। नाऽपि फलसम्बन्धो विधातुं शक्यते। गुणपदानर्थक्यापातात्। नाऽप्युभयविधानम्। गौरवात्; वाक्यभेदापाताच्च।

न च "**दध्नेन्द्रियकामस्य जुहुयात्**" इतिवत् गुणफलसम्बन्धविधानमस्त्विति वाच्यम्। धातोरत्यन्तपारार्थ्यापत्तेः। न हि तदा तत्र धात्वर्थस्य विधेयत्वम्। गुणस्य विधेयत्वाङ्गीकारात्। नाप्युद्देश्यत्वम्। फलस्य तत्त्वात्। अतश्च फलोद्देशेन गुणे विधीयमाने सिद्धस्य तस्य व्यापारसमावेशमन्तरा फलजननासामर्थ्यात् मध्ये कस्यचित् व्यापारस्यापेक्षायां प्रकृतधात्वर्थस्यैव व्यापारत्वमङ्गीकार्यम्। सोऽपि नाऽनेन विधातुं शक्यते। अनेकविधानप्रयुक्तवाक्यभेदप्रसङ्गात्। एवञ्च धात्वर्थस्य प्रकरणप्राप्तमाश्रयत्वमत्राऽनूद्यत इत्येव वक्तव्यम्। ततश्चाऽत्यंतपारार्थ्यं धातोरिति। गुणविशिष्टकर्मान्तरविधाने गुणवाचकपदस्य तद्विशिष्टकर्मबोधनार्थं मत्वर्थलक्षणा स्वीकार्या भवति। सा च दोषायेति तत्परिहाराय उद्भिच्छब्दस्य कर्मनामधेयत्वमेव स्वीकार्यम्। तदा हि तस्य यागवाचकत्वात् धात्वर्थे सामानाधिकरण्येनैवाऽन्वयः उद्भिन्नामकेन यागेन पशुं भावये-

दिति। न चैवं मत्वर्थलक्षणाभिया कर्मनामधेयत्वाङ्गीकारे दधिसोमादावपि तदापत्त्या **'सोमेन यजेते'** त्यत्र न मत्वर्थलक्षणाप्रसक्तिरिति वाच्यम्। दधिसोमादीनां द्रव्यविशेषे रूढत्वेन न तेषां यजिसामानाधिकरण्यं भवितुमर्हतीत्यगत्या तत्र मत्वर्थलक्षणाऽङ्गीकृता। इह तु तथा रूढ्यभावात् सत्यां गतौ न तथाऽङ्गीकरणं युक्तम्। उक्तं हि *पार्थसारथिमिश्रैः*—

> दध्यादौ गत्यभावेन सर्वमेतत्समञ्जसम्।
> उद्भिदादिषु तन्नैवं नामधेयत्वसंभवात्॥ इति॥

अतश्चोद्भिद्वलभिदादिशब्दानां येन योगेन गुणावाचकत्वं तेनैव योगेन उद्भिद्यते उत्पाद्यते फलमनेनेति व्युत्पत्त्या कर्मनामधेयत्वं तेषां मत्वर्थलक्षणाभयादिति सिद्धम्।

## वाक्यभेदभयात् कर्मनामधेयत्वम्

एवं **"चित्रया यजेत पशुकाम"** इत्यादौ चित्रादिशब्दानां कर्मनामधेयत्वं वाक्यभेदभयात्। तथा हि—काम्येष्टिकाण्डप्रकरणे **"दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्य"**मिति वाक्यविहितेष्टिसन्निधौ श्रूयते—**"चित्रया यजेत पशुकाम"** इति। अत्र यदि चित्राशब्दस्य गुणसमर्पकत्वं तदा चित्रगुणस्त्रीत्वयोरुभयोरप्यनेन प्रतिपादनात् स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वेन प्राणिद्रव्यके यागेऽस्य निवेशो वक्तव्यः। प्रकृताया इष्टेर्दध्यादिद्रव्यकत्वेन प्राणिद्रव्यकत्वाभावात् चित्रत्वस्त्रीत्वयोरत्राऽसम्भवन्निवेशात् वाक्यस्याऽस्य प्रकरणादुत्कर्षेणाऽनारभ्याधीतन्यायविषयत्वमङ्गीकृत्य सर्वप्राणिद्रव्यकयागप्रकृतिभूतेऽग्नीषोमीयपशावनयोर्निवेशो वक्तव्यः। तत्र यागस्य वाक्यान्तरेण विहितत्वात् तदुद्देशेनाऽनयोर्विधिर्वक्तव्यः। तदा प्राप्ते कर्मण्यनेकविधाने वाक्यभेदः। तदुक्तम्—

---

१ See पू. मी. 3.6.1. for अनारभ्यन्याय, प्रकृतौ वा द्विरुक्तत्वादिति।

प्राप्ते कर्मणि नाऽनेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति ।

"अजोऽग्नीषोमीयः," "कृष्णसारङ्गोऽग्नीषोमीयः" इति प्राकरणिकवाक्याभ्यां वर्णलिङ्गयोः विहितत्वाच्च तत्र चित्रत्वस्त्रीत्वयोः पुनर्विधानायोगात् ।

अथ अग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधाने वाक्यभेदप्रसक्तेः "सारस्वती मेषी"ति वाक्यविहितमेषीयागे साप्तदश्यन्यायेन[1] चित्रयेति स्त्रीकारकानुवादेन चित्रत्वविधानं परमस्तु । उत्पत्तिवाक्येनैव स्त्रीत्वस्य प्राप्तत्वात् नोभयविधानमिति न भविष्यति वाक्यभेदः । उपदिष्टेन च चित्रत्वेनाऽतिदिष्टस्य कृष्णसारङ्गवर्णस्य बाध इति चेत्—न; चित्रयेति प्रत्ययांशेन स्त्रीकारकमनूद्य प्रकृत्यंशेन चित्रत्वविधाने ऐकप्रसरताभङ्गापत्तेः[2] । एकस्य शब्दस्य उद्देश्यत्वेन विधेयत्वेन वा एकयैव रीत्या प्रसरणं शब्दधर्मः । तत् यद्यत्र प्रत्ययार्थस्योद्देश्यत्वं प्रकृत्यर्थस्य विधेयत्वमुच्येत तर्हि तद्भङ्गप्रसङ्गः, फलपदवैयर्थ्यञ्च । उभयविधाने च वाक्यभेदः । अतश्च मेष्यनुवादेन न चित्रत्वविधानं सम्भवति । अतः पारिशेष्यात् कर्मनामधेयत्वमेव स्वीकार्यम् । स्वीकृते च तस्मिन् चित्राशब्दस्य कर्मनामधेयत्वेन सामानाधिकरण्येनैव धात्वर्थेऽन्वय इति न वाक्यभेदप्रसङ्ग इति । इष्टेर्दध्यादिविचित्रद्रव्यकत्वेन चित्रत्वमिष्टत्वाच्च स्त्रीत्वमिति ।

अत्रेदं वक्तव्यम्—तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठानुवाके श्रूयते—"चित्रया यजेत पशुकाम" इति । तदनन्तरञ्च "प्रैवाग्नेयेन वापयती" त्यादिना सप्त हवींषि विहितानि । तत्र चरुचतुष्कं पुरोडाशत्रयञ्चेति सप्त । न तत्र दधिमध्वादीनां श्रवणमस्ति ।

---

१ See पू० मी० 3. 6.2 for साप्तदश्यन्याय 'प्रकरणविशेषात्तु' इत्यादि ।
२ See पू० मी० 3. 5.9 for एकप्रसरतान्याय 'वषट्काराच्च भक्षयेत्' ।

न वा तेषु प्रजापतिर्देवता। किञ्च तत्र **"यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा"** इति चित्राशब्दप्रवृत्तिनिमित्तमपि प्रकारान्तरेण वर्णितम्। अतो नेदमुदाहरणं भवितुमर्हति।

तत्रैव च तृतीयप्रपाठके द्वितीयानुवाके **"दधि मधु घृतमापो धाना भवन्ति"** इत्यादीनि पञ्च हवींष्याम्नातानि। **"प्राजापत्यं भवति"** इत्यादिना तेषां प्राजापत्यत्वमपि तत्रोक्तम्। परं न तत्र **"चित्रया यजेत पशुकाम"** इति वाक्यश्रवणम्। अतो नेदमप्युदाहरणम्। मैत्रायणीयादिशाखास्वपि नैतादृशं वाक्यद्वयमेकत्र सङ्गतमुपलभ्यते। अतो भाष्यकारादिलेखनबलात् एतत्प्रकरण एव दध्यादिसप्तकविशिष्टं वाक्यं तत्सन्निधौ 'चित्रया यजेते'ति वाक्यञ्च शाखान्तरे क्वचिच्छ्रूयत इत्यभ्युपगन्तव्यम्। तदेव चाऽत्रोदाहरणमिति। अनेनैव न्यायेन **"पञ्चदशान्याज्यानि" "सप्तदशानि पृष्ठानि" "त्रिवृद्बहिष्पवमान"** मित्यादिषु बहिष्पवमानाज्यपृष्ठशब्दानां कर्मनामधेयत्वं वेदितव्यम्।

## तत्प्रख्यन्यायेन नामधेयता

**"अग्निहोत्रं जुहोति" "आघारमाघारयति"** इत्यादिषु अग्निहोत्रादिशब्दानां कर्मनामधेयत्वं तत्प्रख्यशास्त्रात्। तथा हि **"हुयामाश्रुभसिभ्यस्त्रन्"** इत्यौणादिकसूत्रेण विहितत्रन्प्रत्ययान्तः होत्रशब्दः। स च भावसाधनः हूयत इति होत्रं, होम इत्यर्थः*।

---

१ व्रीहियवाद्यन्यतमतण्डुलप्रकृतिकः अनवस्रावितः स्थाल्याद्यन्तरूष्मपक्व ओदनश्चरुः। कपालादिवहिरूष्मश्रपितः पिष्टपिण्डस्तादृशप्रकृतिकः पुरोडाशः।

२ आहिताग्निना सपत्नीकेन प्रतिदिनं सायं प्रातः क्रियमाणो होमविशेषः दधिपयोयवागूतण्डुलान्यतमद्रव्यकः अग्निहोत्रम्।

* अत्र यद्यपि प्राचीनैः कर्मव्युत्पत्तिमाश्रित्य दध्यादिद्रव्यपरत्वमङ्गीकृत्याग्नये होत्रं अग्न्युद्देश्यकहोमसाधनद्रव्यं यस्मिन्निति बहुव्रीह्याश्रयणेनाग्निहोत्रशब्दः प्रसा-

तत्र न तावत् अग्नौ होत्रं होम इति व्युत्पत्त्या होमाधारभूतस्याऽग्नेर्विधानं सम्भवति। "**यदाहवनीये जुहोति**" इत्यनारभ्याधीतेन वाक्येन वैदिकसर्वहोमोद्देशेनाऽधिकरणविधायकेनाऽस्मिन् होमेऽपि तत्प्राप्तेः। नापि अग्नये होत्रमिति चतुर्थीतत्पुरुषमाश्रित्य सम्प्रदानभूतोऽग्निः देवतात्वेन विधातुं शक्यते। तस्याऽपि "**अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोती**"ति मन्त्रविध्यन्यथानुपपत्तिकल्पितविधिना प्राप्तेः। मन्त्रो हि क्रियां तत्सम्बद्धं वा किञ्चित् प्रकाशयन्नङ्गं भवति। तेनाऽत्र होमीयां देवतां प्रकाशयन्नङ्गत्वं भजति। अत एवैतत्प्रकाश्याया देवताया एतच्छेषिभूतक्रियाङ्गत्वमिति कल्पनादेव देवताप्राप्तेः।

केचित्तु एतत्प्रकरणपठिताभ्यां "**यदग्नये च प्रजापतये च सायं जुहोति**" "**यत्सूर्याय च प्रजापतये च प्रातर्जुहोति**" इति वाक्याभ्यां अग्निसमुच्चितप्रजापतेस्सूर्यसमुच्चितप्रजापतेश्च प्राप्तिः। न च प्राप्तहोमोद्देशेनोभयविधाने वाक्यभेदः। परस्परनिरपेक्षयोर्द्वयोर्विधाने वाक्यभेदस्स्यात्। तदा हि द्वयोरपि पृथगेवाऽऽख्यातान्वयस्याऽभ्युपगन्तव्यत्वात् विधेरावृत्तिमन्तरा तदसम्भवात् विध्यावृत्तिलक्षणो वाक्यभेदः प्रसज्येत। यदा त्वेकस्यास्समुच्चयेऽन्वयमङ्गीकृत्य तत्समुच्चिताया अपरस्या विधानं तदा विशिष्टस्यैकस्यैव भावनान्वयान्नाऽऽवृत्तिकल्पनाप्रसङ्ग इति न वाक्यभेदः।

---

१धतः, तथाऽपि भावसाधनत्वाङ्गीकारेणैव निर्वाहसम्भवे कर्मसाधनत्वाङ्गीकरणे फलाभावात् वेदे प्रायशस्सर्वत्र 'अग्निहोत्रं जुहोति' 'अग्निहोत्रं यज्ञानां' 'तस्मादग्निहोत्रमुच्यते' इत्यादौ अग्निहोत्रशब्दस्यान्तोदात्तत्वस्यैव श्रवणात् तस्य च स्वरस्य तत्पुरुषसमास एव सङ्गतेः तत्पुरुषस्वीकारे च धात्वर्थसामानाधिकरण्यसिद्ध्यर्थं भावसाधनत्वस्यैवाङ्गीकर्तव्यत्वात् अध्वरमीमांसाकुतूहलवृत्तिमीमांसाकौस्तुभायुक्तरीत्या अस्माभिः भावसानत्वमेवाङ्गीकृतम्। See अध्वरमीमांसाकुतूहलवृत्तिः P. 92. L. 5. sri vani vilas edn. वस्तुतस्तु होत्रशब्दो भावसाधनः। अग्नये होत्रं होमः, अग्निहोत्रम्, इत्यादि। Also See मीमांसाकौस्तुभ by खण्डदेव P, 209. L. 13—19. chow. edn.

अत एव प्राप्तज्योतिष्टोमोद्देशेन **"गौश्चाऽश्वश्चाऽश्वतरश्च"** इत्यादिनाऽनेकेषां दक्षिणाद्रव्याणां विधानं दशमोक्तं सङ्गच्छते। अन्यथा तत्रापि वाक्यभेदप्रसङ्गः केन वार्येत इत्याहुः। सर्वथा देवतायाः प्राप्तत्वात् नाऽनेन पुनर्विधानं भवितुमर्हति। अतः परिशेषादग्निहोत्रपदं कर्मनामधेयं तत्प्रख्यशास्त्रात्। तस्य विधित्सितस्य गुणस्य प्रख्यं, प्रख्यापकं, बोधकमिति यावत्, यतश्शास्त्रान्तरमस्ति, तस्मात्कर्मनामधेयमिति।

## आघारादिशब्दानां कर्मनामधेयत्वम्

एवम् **"आघारमाघारयति"[1] "समिधो यजति"[2] "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"[3] "ज्योतिष्टोमेन स्वर्गकामो यजेत" "वाजपेयेन स्वाराज्यकामो यजेत"[4]** इत्यादौ, आघारसमिद्दर्शपूर्णमासज्योतिष्टोमवाजपेयशब्दाः कर्मनामधेयानि तत्प्रख्यन्यायेनैव। अत्र आघारशब्दे क्षरणाख्या क्रिया, समिच्छब्दे तन्नाम्नी देवता, दर्शपूर्णमासशब्दे अमावास्यापौर्णमासीरूपः कालः, ज्योतिष्टोमशब्दे ज्योतिश्शब्दवाच्याः त्रिवृत्पञ्चदशसप्तदशैकविंशरूपाश्चत्वारस्स्तोमाश्च (साममन्त्रसाध्यस्तोत्रगतसङ्ख्याविशेषाः) अभिधीयन्ते। तेषां स्वस्वसन्निधिपठितैर्वाक्यैरेव मन्त्रार्थवादादिरूपैः प्राप्तत्वात् न पुनर्विधिर्भवितुमीष्टे। अतस्तत्प्रख्यन्यायेन तेषां नामधेयत्वम्।

---

१ दर्शपूर्णमासयागाङ्गभूतं आज्येनाऽऽहवनीये तिर्यगन्वग्वा क्रियमाणमाहुतिद्वयमाघारपदार्थः।

२ दर्शपूर्णमासाङ्गभूतेषु पञ्चसु प्रयाजेषु प्रथमः प्रयाजस्समित्।

३ आहिताग्निनैव सपत्नीकेन पौर्णमास्यनन्तरप्रतिपदि अमावास्यानन्तरपदि चाऽनुष्ठेयः पौर्णमास्यां प्रातरारभ्य श्वोभूते समापनीयः, अमावास्यायां प्रातरारभ्य श्वोभूते समापनीयश्चेति कर्मसमुदायद्वयं दर्शपूर्णमासपदवाच्यम्।

४ ज्योतिष्टोमः सर्वसोमयागप्रकृतिभूतस्सोमयागविशेषः। वाजपेयश्च सोमयाग एव विकृतिभूतः।

तत्र "चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्य", "समिधो-अग्न आज्यस्य वियन्तु", "य एवं विद्वान् पौर्णमासीं यजते", "य एवं विद्वानमावास्यां यजते" (इत्युत्पत्तिवाक्यावगतकालसम्बन्धानुवादकं वाक्यद्वयं) "एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः" इत्यादीनि क्रमशो विधित्सितगुणप्रापकाणीत्यवगन्तव्यम्। वाजपेयशब्दे च निर्वचनद्वयं सायणाचार्यैरुक्तं वेदभाष्ये—वाजः देवान्नरूपः सोमः पेयो यस्मिन् यागे स वाजपेय इत्येकं निर्वचनम्। यस्माद्देतेन देवाः वाजं फलरूपमन्नं प्राप्तुमैच्छन् तस्मादन्नरूपो वाजः प्राप्यो येन स वाजपेय इत्यपरं निर्वचनम्। एवञ्च प्रवृत्तिनिमित्तद्वयेऽपि वाजः पेयो यस्मिन् स वाजपेय इति बहुव्रीहिसमास आश्रितो भवति। तत्र प्रथमपक्षानुसारेण पाधातोः "अचो यत्" इति यत्प्रत्यये "ईद्यति" इति ईत्वे ईकारस्य गुणे च कृते पेयशब्दनिष्पत्तिः। तस्य च "यतोऽनाव" इत्याद्युदात्तत्वम्। ततो बहुव्रीहौ कृते वाजशब्दस्याऽऽद्युदात्तत्वात् "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इत्यनेन पूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तेन भाव्यम्। तथाऽपि बाहुल्येन—

'परादिश्च परान्तश्च पूर्वान्तश्चाऽपि दृश्यते'

इति वार्तिकानुसारेण मध्योदात्तत्वं साधनीयम्। तथा चाऽस्मिन्पक्षे पेयरूपं द्रव्यं सोम एव। तस्यैव "[2]प्रतिष्ठन्ति सोमग्रहैः" इति प्रचारविधानात सुराग्रहाणाञ्च वाजसृद्भ्यस्सुराग्रहान् हरन्ति" इति[3] वैश्येभ्यो

---

१ See सायणभाष्य on देव सवितः प्रसुव तै. सं. १.७.७. P.1011. L. 8 An. ed.

२ See तै. ब्रा. १. ३. ३. ७. Also सायणभाष्य P. 125 vol I An. edn. प्रतिष्ठन्ति, प्रचरन्ति जुह्वतीत्यर्थः etc.

३ See in the same page. वाजसृतः, अन्नस्याऽर्जयितारो वैश्याः, तेभ्यः, सुराग्रहान् सोमरहितान् दद्युः etc.

दानविधानात् सोमस्य च तत्तद्ग्रहणविधायकवाक्यैर्विधानेन प्राप्तत्वात् वाजपेयशब्दस्तन्निमित्तीकृत्य नामधेयम् ।

यत्तु सिद्धान्त[1]कौमुदीव्याख्याने तत्त्वबोधिन्यां "क्रतुयज्ञेभ्यश्च" इति सूत्रव्याख्याने वाजो नाम यवागूभेदः, तस्य पेयो वाजपेय इति षष्ठीतत्पुरुषमङ्गीकृत्य कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वं साधितं, तत् षष्ठीतत्पुरुषाङ्गीकारे द्रव्यवाचकत्वे पर्यवसानात् कर्मनामत्वानुपपत्त्या कर्मनामधेयत्वसिद्धान्तोच्छेदापत्तेरुपेक्षितम् ।

एतेन यद् भाट्टदीपिकाव्याख्याने भाट्टचिन्ता[2]मणौ वाजं च तत्पेयं चेति व्युत्पत्त्या वाजपेयशब्देऽन्तोदात्तत्वनिर्वाह इत्युक्तं तदपि परास्तम् । तस्याऽन्तोदात्तत्वाभावाच्च ।

यच्च प्राचीनग्रन्थे[3]षु वाजपेययागे सुराद्रव्यप्राप्तिं निमित्तीकृत्य नामधेयत्वसाधनं तत् सुराद्रव्यस्य यागे त्यागादिदेवतासम्बन्धाभावेऽपि यागप्रयोगसम्बन्धमात्रेण तत्प्रख्यन्यायसम्भवाभिप्रायेणेति वेदितव्यम् । श्रुतिस्वारस्यात्, अनुष्ठेयपदार्थानुगुण्याच्च । एतेन ये नाम याग एव साक्षात्सुरासम्बन्धमङ्गीकृत्य नामधेयत्वमर्वाचीनाः केचन साधयन्ति तेषां मतं श्रुतिविरोधात् पदार्थाननुगुणत्वाच्चोपेक्षणीयमेव ।

## तद्व्यपदेशन्यायः

"श्येनेनाऽभिचरन् यजेत" "सन्दंशेनाऽभिचरन् यजेत" "गवाऽभिचर्यमाणो यजेत" इत्यादौ श्येनादिशब्दाः तद्व्यपदेशन्यायेन कर्मनामधेयानि । तथा हि—नाऽत्र प्रकृतसोमयागोद्देन श्येनादिरूपा गुणा विधातुं शक्यन्ते । उत्पत्तिशिष्टसोमावरुद्धे श्येनादीनां

१ See सिद्धान्तकौमुदी P. 149. L. 40 N. S. Press edn.

२ See भाट्टचिन्तामणि Commentary of भाट्टदीपिका P. 126. L. 3. L. J. Press. Madras.

३ See शास्त्रदीपिका by पार्थसारथिमिश्र P. 72. L. 3. N. S. edn.

निवेशासम्भवात्। नाऽपि वाक्यभेदादीनां सम्भवः। अनेकगुणोपादानाभावात्। अतश्चाऽर्थवादे श्येनसादृश्यव्यपदेशात् सादृश्यस्य च भिन्ननिष्ठत्वात्, तदनुरोधेन श्येनशब्दः कर्मनामधेयम्—श्येननामकेन केनचन यागेनाऽभिचारकामो यजेतेति। अभिचारो वैरिमरणानुकूलो व्यापारः। अर्थवादाश्च—"यथा वै श्येनो निपत्याऽऽदत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते यमभिचरति श्येनेन" "यथा वै सन्दंशेन दुरादानमादत्ते" "यथा गावो गोपायन्ति" इत्यादयो बोध्याः।

एवं मत्वर्थलक्षणा, वाक्यभेद, तत्प्रख्यशास्त्र, तद्व्यपदेशाख्यैश्चतुर्भिरेव प्रकारैस्सर्वत्र कर्मनामत्वं बोध्यम्, न पञ्चमः प्रकारः कश्चिदस्ति।

## वैश्वदेवशब्दस्य कर्मनामत्वम्

"वैश्वदेवेन यजेते" त्यत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वं तत्प्रख्यन्यायेनैव। तथा हि—

चातुर्मास्येषु चत्वरि पर्वाणि[1]—वैश्वदेवः, वरुणप्रघासः साकमेधः, शुनासीरीयश्चेति। तत्र वैश्वदेवाख्ये प्रथमे पर्वणि 'आग्नेयमष्टाकपालं निर्वपति' इत्यादिना यागाष्टकं विधाय तत्सन्निधौ श्रुतं "वैश्वदेवेन यजेते"ति। अत्र न तावन्मत्वर्थलक्षणाभयात् वैश्वदेवशब्दस्य कर्मनामत्वं सम्भवति, तद्धितेनैव मत्वर्थस्योक्तत्वात्। नाऽपि वाक्यभेदभयात्, विधेयानेकगुणाभावात्। नाऽपि चतुर्थप्रमाणेन। तादृशस्य व्यपदेशस्याऽभावात्। न चाऽपि आग्नेयादिषु देवताविधानं सम्भवति। तेषां स्वस्वोत्पत्तिवाक्यैरेव देवताया विहितत्वात्। उत्पत्तिशिष्टगुणावरुद्धे कर्मणि गुणान्तरान्वयासम्भवात्। उत्पत्तिशिष्टगुणैरेवाऽऽकाङ्क्षायाश्शान्तेः। अतः परिशेषात् तत्प्रख्यन्यायेनैव कर्मनामत्वं स्वीकार्यम्।

---

१ फाल्गुन्यादिषु पौर्णमासीषु अनुष्ठेयो यागसमुदायः पर्वशब्देनाऽवबोध्यते।

स च गुणो विश्वदेवरूपो यद्यपि नाऽष्टस्वपि प्राप्तः। **वैश्वदेव्यामिक्षा** इत्यामिक्षायाग एव तत्प्राप्तेः। तथाऽपि तत्प्राप्तिमुपजीव्यैव छत्रि[1]न्यायेन विश्वदेवदेवताकयागघटितनिर्वपतिलक्ष्ययागमात्रवृत्तिसमुदायाश्रयत्वरूपं प्रवृत्तिनिमित्तमादाय वैश्वदेवशब्दः शक्त्यैव अष्टानां यागानां नामधेयम्। तत्प्रयोजनञ्च, तेषां वैश्वदेवशब्दवाच्यत्वसम्पादनमुखेन **"प्राचीनप्रवणे वैश्वदेवेन यजेत"** इति देशसम्बन्धं **" वसन्ते वैश्वदेवेन यजेत"** इति कालसम्बन्धं च सम्पाद्य, तद्द्वारा चातुर्मास्यसंज्ञाप्रापणेन **"अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति"** इत्यनेन फलसम्बन्धकल्पनम्। 'अत्रोत्पत्तिशिष्टगुणबलीयस्त्वेनैव वैश्वदेवशब्दस्य नामधेयत्वं दर्शयितुमेवमारम्भः, इति वदन् *न्यायसुधाकारः*[2] पूर्वोक्तचतुष्टयापेक्षया पञ्चमं प्रकारं नामधेयत्वसाधकमङ्गीकरोतीति गम्यते। *पार्थसारथिमिश्रस्तु*[3] तत्प्रख्यन्यायेनैव नामधेयत्वमिच्छति। *नवीनास्तु* नाऽत्र केवलतत्प्रख्यन्यायेन नामधेयत्वम्। तस्य आमिक्षायागमात्रविषयत्वेन यागाष्टकनामत्वासाधकत्वात्। अत उत्पत्तिशिष्टगुणबलीयस्त्वमप्यत्र सहकारि। एवञ्चोत्पत्तिशिष्टगुणबलीयस्त्वसहकृततत्प्रख्यन्यायेन वैश्वदेवशब्दः कर्मनामधेयमिति वदन्ति[4]। अतश्चतुर्भिरेव निमित्तैः सर्वत्र कर्मनामत्वमिति सिद्धम्।

## द्रव्यनामत्वनिरूपणम्

एवं बर्हिराज्यपुरोडाशादिशब्दानां तत्तद्द्रव्यनिष्ठतत्तज्जातिमात्रवाचित्वम्। **बर्हिष्ट्वं** कुशनिष्ठो जातिविशेषः। **घृतत्वं** आज्यनिष्ठा जातिः।

---

१ See पू. मी. 1. 4. 18. for छत्रिन्याय।

२ See न्यायसुधा Commentary on तन्त्रवार्तिक P. 471 l. L. 33 Chow. edn.

३ See शास्त्रदीपिका P. 80. L. 13. तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः।

४ See भाट्टदीपिका P. 147. L. 3. L. J. edn. उत्पत्तिशिष्टदेवतावरोधसहकृततत्प्रख्यन्यायात्।

यवव्रीह्यादिपिष्टनिर्मितः कूर्माकृतिकः कपालश्रपितः पिण्डविशेषः **पुरोडाशो** नाम। तन्निष्ठा जातिः **पुरोडाशत्वम्**। न हीमे लवनादिसंस्कारवाचकाः तद्विशिष्टद्रव्यवाचका वा। एतेषां तत्तज्जातिमात्रे संस्काररहितेऽपि "**बर्हिरादाय गावो गताः, आज्यं क्रय्यम्**" इत्यादिप्रयोगदर्शनात्। याज्ञिकैर्जातिं विहाय संस्कारमात्रे तद्विशिष्टेऽन्यस्मिन् वा द्रव्ये क्वचिदप्यप्रयोगात्, तत्र जातेरव्यभिचारात्।

एवं "**प्रोक्षणीरासादये**"त्यादौ प्रोक्षणीशब्दो यौगिकः। प्रकृष्टोक्षणसाधनत्वेन जलवाची। "**निर्मन्थ्येनेष्टकाः पचन्ति**" इत्यत्र निर्मन्थ्यशब्दो योगरूढ्या अरणितोऽचिरमथनजन्याग्निवाची।

"**त्रिवृत् स्तोमो भवति**" इत्यत्र त्रिवृच्छब्दो वैदिकप्रसिद्ध्या ऋङ्नवकवाची। चरुशब्दोऽनवस्रावितान्तरूष्मजन्यपाकाश्रयौदनवाची। "**आश्ववालः प्रस्तर**" इत्यत्र आश्ववालशब्दः काशविशेषवाचकः। "**ऐक्षवी विधृती**" इत्यत्र ऐक्षवीशब्दः काशमूलवाची। याज्ञिकास्तु ऐक्षवीशब्दस्य इक्षुविकारवाचित्वमेवाऽङ्गीकुर्वन्ति। अत्र सर्वत्रापि एतादृशार्थनिर्धारणकारणं तत्तत्संन्निधिपठितार्थवाद एव। यद्यप्यर्थवादानां विधेयार्थस्तावकत्वेनैव प्रामाण्यमिति न स्वार्थे तात्पर्यं तेषामित्युक्तमर्थवादाधिकरणे, तथाऽप्येतादृशसन्दिग्धार्थनिर्णयोऽर्थवादैरेव भवितुमर्हति। न ह्यन्यथा "**अक्ताश्शर्करा उपदधाति**" "**आश्ववालः प्रस्तरो भवति**" "**यवमयश्चरुर्भवति**" इत्यादौ विधेयार्थो निश्चेतुं शक्यते। अतश्च क्वचिदर्थवादानां स्वार्थपरताऽप्यङ्गीकार्या। तेन च विधेयार्थनिर्णयः।

**एतदुक्तं भवति—**अर्थवादाः केचन सत्यार्थस्यैव शक्त्योपस्थापकाः।

---

१ See धूर्तस्वामिभाष्य on आपस्तम्बश्रौतसूत्र 6. 6. 6. to be published in Geakwad's Oriental Series, Baroda, ऐक्षवी इक्षुपर्णे, also दीपिका of रुद्रदत्त इक्षुशलाके इति भारद्वाजः,

केचित् असत्यार्थस्य । तत्र ये सत्यार्थोपस्थाकास्तेषां स्वार्थेऽपि प्रामाण्यमभ्युपगम्य तद्द्वारैव विधेयार्थसमर्पणस्तुत्यादिलक्षणया विध्येकवाक्यता स्वीक्रियते। येषां तन्न, तेषां येन केनाऽप्यालम्बनेनाऽर्थसत्यत्वमुपपाद्य तदर्थसम्बन्धलक्षणया विध्येकवाक्यत्वम् । अतश्च त्रिवृदश्ववालाज्यपृष्ठादिशब्दानामर्थवादबलादेव तत्तदर्थनिर्णय इति ।

## विध्यर्थवादयोरेकवाक्यतानिरूपणम्

**अत्रेदमवधेयम्**—एकवाक्यता द्विविधा–वाक्यैकवाक्यता पदैकवाक्यता चेति । यत्र वाक्ययोः पृथक् पृथक् स्वार्थमवबोध्य समाप्तव्यापारयोः पुनः कार्यान्तरवशात् परस्परसम्बन्धेनैकार्थबोधकता तत्र वाक्यैकवाक्यता। यत्र तु अपर्यवसितार्थकस्यैव वाक्यस्य पर्यवसितार्थेन अपर्यवसितार्थेन वा वाक्येन सह सम्बध्यैकार्थबोधकता तत्र पदैकवाक्यता। तत्राऽऽद्यस्योदाहरणम्–दर्शपूर्णमासप्रयाजवाक्ये । तदुक्तम्—

**स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।**
**वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते ।। इति ।**

तदेतत् प्रकरणनिरूपणावसरे विवरिष्यते । द्वितीयस्योदाहरणमर्थवादाः । तत्र यद्यपि विधयोंऽशत्रयविशिष्टभावनाविधानेन चरितार्थाः, तथापि अर्थवादानां न स्वार्थे समाप्तिः । तेषां स्वशक्यार्थमात्रे प्रयोजनाभावेन तत्र पर्यवसानाभावात् । अतश्च तैः लक्षणया प्राशस्त्यमप्राशस्त्यं वाऽवबोध्यते। तच्चाऽर्थवादवाक्यस्थैस्सर्वैरपि पदैः प्रतिपाद्यते .विनिगमनाविरहात् पदान्तरवैयर्थ्याच्च । तेषामनेकत्वेऽपि प्राशस्त्यरूपपदार्थप्रतिपादकत्वेनैकपदस्थानापन्नत्वात् तेषां या विधिना सहैकवाक्यता सा पदैकवाक्यतेति कथ्यते । एकवाक्यताप्रकारश्च–प्रशस्तं वायुदेवताकं कर्म भूतिरूपफलायाऽनुतिष्ठेदिति । लक्षणाघटकसम्बन्धश्च स्वघटकक्षेपिष्ठादि-

पदवाच्यक्षेपिष्ठत्वा ( शीघ्रगामित्वा ) दिगुणविशिष्टवाय्वादिदेवताकत्वसामानाधिकरण्यरूपो बोध्यः ।

केचित्तु विध्यर्थवादयोरेकवाक्यता पदैकवाक्यता वाक्यैकवाक्यता चेति द्विधाऽपि सम्भवति। तत्र 'वायुर्वै' इत्यादौ पदैकवाक्यता । 'यजमानः प्रस्तर' इत्यादौ वाक्यैकवाक्यतेति । उक्तं हि तैः—**यत्रैकस्मिन् पदे प्राशस्त्यलक्षणामङ्गीकृत्य तस्येतरपदार्थेऽन्वयमङ्गीकृत्य वाक्यार्थपर्यवसानं, तत्राऽर्थवादविध्योर्वाक्यैकवाक्यता । यत्र तु न तथा तत्र सर्वत्र वाक्य एव प्राशस्त्यलक्षणामङ्गीकृत्य पदार्थविधयोपस्थितस्य तस्य विध्याख्यातार्थ एवाऽन्वयात् विध्यार्थवादयोः पदैकवाक्यतैवेति ।** अक्ताधिकरणवार्तिकपर्यालोचनया तु सर्वाऽप्यर्थवादविध्योरेकवाक्यता पदैकवाक्यतैवेति प्रतीयते । यथोक्तं तत्र—**ये हि पदसङ्घाताः कर्मौपयिकेष्वर्थेषु पर्यवस्यन्ति तेषां नानावाक्यत्वं युक्तम् । न त्वर्थवादानामेकवाक्यत्वात् प्राक् प्रयोजनलाभ इति प्रथममेवैकवाक्यता** इति ।

अर्थवादेषु क्वचित् गौणीगर्भलक्षणाऽप्यङ्गीक्रियते । यथा—यजमानः प्रस्तर इत्यत्रैव । अत्र हि यजमानशब्दः प्रस्तरशब्दसमानाधिकरणः न दर्भमुष्टिविशेषरूपप्रस्तरविशेषणं भवितुमर्हति, बाधात् । अतश्च यजमानशब्दे स्रुगादिधारणरूपयजमानगुणयोगात् गौण्या वृत्त्या प्रस्तरवाचित्वमङ्गीक्रियते । ततश्च प्राशस्त्यलक्षणेति ।

तस्यां च गौण्यां वृत्तौ वेदे षट् निमित्तानि—तत्सिद्धिः जातिः, सारूप्यम्, प्रशंसा, भूमा, लिङ्गसमवाय इति ।

---

१ See भाट्टरहस्य of खण्डदेव P. 20 L. 24 शास्त्रमुक्तावलि सीरीज काञ्चीपुर ।

## [ तत्सिद्धिः ]

तत्सिद्धिस्तत्कार्यकारित्वम् । "यजमानः प्रस्तरः" इत्यत्र यज[1]मानकार्यकारित्वं प्रस्तरे गौणीवृत्तिनिमित्तम् ।

## [ जातिः ]

जातिर्जननम् । "एष वा अग्निर्ब्राह्मण" इत्यत्र ब्राह्मणेऽग्निपदप्रवृत्तिनिमित्तं एकमुखप्रभवत्वम् । "प्रजापतिरकामयत" इत्यस्मिन्ननुवाके एकस्मात् प्रजापतेर्मुखात् अग्नेः ब्राह्मणस्य चोत्पत्तिः श्रूयते—"स[2] मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत । गायत्रं छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणाम्" इति ।

## [ सारूप्यम् ]

"यजमानो यूपः" "आदित्यो यूप" इत्यादौ तेजस्वित्वोर्ध्वत्वादिकं सारूप्यं निमित्तम् । यजमानो हि दीक्षादिसंस्कारैः संस्कृतः ब्राह्मेण तेजसा समुज्ज्वलन् भाति । यूपोऽपि हि तक्ष[3]णाञ्जनादिभिः संस्कृतः तेजसा युक्तः प्रतिभासते । अतः समानरूपवत्त्वमत्र प्रवृत्तिनिमित्तम् । समानं रूपं सरूपम्, तदेव सारूप्यं चतुर्वर्णादित्वात् स्वार्थे ष्यञ् प्रत्ययः । समानो धर्म इत्यर्थः ।

---

१ प्रस्तरो दर्भमुष्टिः लवनकाले प्रथमपरिलूनः । स्रुचां धारणं यजमानेन कार्यं, तच्चाऽनेन प्रस्तरेण क्रियत इति यजमानकार्यकारित्वम् ।

२ सः प्रजापतिः स्वीयात् मुखात् त्रिवृन्नामकं स्तोममुदपादयत् । तं स्तोममनु अग्निर्देवताऽसृज्यत । गायत्री च्छन्दः, रथन्तराख्यं साम, मनुष्याणां मध्ये ब्राह्मणश्चाऽसृज्यन्त इति ब्राह्मणवाक्यस्यार्थः । एवं पुरुषसूक्तेऽपि ब्राह्मणोऽस्य मुखमासीत् । मुखादग्निरजायत, इत्यादि द्रष्टव्यम् ।

३ तक्षणं त्वचो निष्कासनम् । अञ्जनं घृतसेकादिना श्लक्ष्णीकरणम् ।

## [ प्रशंसा ]

"**अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः**" इत्यत्र पशुशब्दस्य गवाश्वगतप्राशस्त्यबोधकत्वं प्रशंसया । अत्र हि अपशुशब्दः पशुभिन्नघटादिवचनः स्वशक्यार्थनिष्ठप्राशस्त्याभावरूपगुणयोगात् अजादौ गौणस्सन् तन्निन्दामवगमयति । सा च "**नहिनिन्दा**" न्यायेन विधेय-गवाश्वादिस्तुत्यर्था । अतश्च प्रशंसाभावस्य गुणत्वे प्रतियोगिविधया प्रशं-साया अपि प्रकारतायां प्रविष्टत्वान्निमित्तत्वोपपत्तिः ।

## [ भूमा ]

चयनप्रकरणे श्रुते "**सृष्टीरुपदधाती**"त्यत्र सृष्टिशब्दो गौण्या वृत्त्या सृष्ट्यसृष्टिघटितसप्तदशमन्त्रसमुदायपरः। अत्र हि "**तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः**" इति पाणिनिसूत्रेण आसामिष्ट-कानामुपाधानार्थो मन्त्रस्सृष्टिपदघटित इत्यस्मिन्नर्थे यत्प्रत्यये मतुप्प्रत्यये तयोश्च लोपे कृते निष्पन्नः सृष्टिशब्दः सृजिधातुघटितमन्त्रोपधेयेष्टकापर-स्सन् इष्टकानामन्यतः प्राप्तत्वात् विशेषणीभूतमन्त्रमात्रे पर्यवस्यति । तत्र च निमित्तं बाहुल्यम् । "**एकयाऽस्तुवत, प्रजा अधीयन्त**" इत्यनु-वाके सन्ति सप्तदश मन्त्राः । तत्र प्रथमत्रयोदशसप्तदशाः त्रयो मन्त्राः सृष्टिपदाघटिताः । अन्ये चतुर्दश मन्त्राः सृष्टिपदघटिताः । तत्र सर्व-त्राऽपि सृष्टिपदप्रयोगो बाहुल्यात् समुदाये बहुलं सृष्टिपदघटिताः मन्त्राः सन्तीति ।

## [ लिङ्गसमवायः ]

तत्रैव श्रूयमाणे "**प्राणभृत उपदधाती**"त्यत्र प्राणभृच्छब्दः पूर्ववत् प्राणशब्दघटितमन्त्रोपधेयेष्टकानां तदितरासाञ्च बोधको भवन् इष्टकानां प्राप्तत्वात् विशेषणीभूतेषु मन्त्रेषु पर्यवस्यति गौण्या वृत्त्या । तत्र प्रवृत्ति-

निमित्तञ्चाऽल्पता। "**अयं पुरो भुवः**" इत्यनुवाके पञ्चाशन्मन्त्राः पठिताः। तेषु च द्वितीयतृतीयदशममन्त्राः प्राणशब्दघटिताः, इतरे तदघटिताः। तत्र प्राणशब्दघटितानामल्पत्वात् अल्पत्वरूपलिङ्गसमवायोऽत्र निमित्तम्। लिङ्गं प्राणप्रतिपादनसामर्थ्यं, तस्य समवायः सम्बन्धमात्रम्। तदत्र गौणीवृत्तिनिमित्तमिति। अयमेव लिङ्गसमवायो लोके '**छत्रिन्याय**' इत्युच्यते। वाक्यशेषस्य सन्दिग्धार्थनिर्णायकत्वद्वारा धर्मे प्रामाण्यं पूर्वमुक्तम्। एवं सामर्थ्यस्याऽपि स्रुवादिगतस्य द्रवद्रव्याद्यवदानसाधनत्वनिर्णायकत्वम्।

## स्मृतिप्रामाण्यनिरूपणम्

एवं मन्वादिस्मृतीनामपि धर्मे प्रामाण्यम्। परन्तु तासां न वेदवत् स्वातन्त्र्येण प्रामाण्यम्। किन्तु वेदमूलकत्वेन। मन्वादयो हि सर्वज्ञकल्पाः अधिगतनिखिलवेदागमरहस्या इतस्ततो विप्रकीर्णानि शाखान्तरगतानि वाक्यान्युद्धृत्य इदानीन्तनानां मन्दबुद्धीनामनुग्रहाय स्मृत्वा च तांस्तानर्थान् स्वग्रन्थे उपनिबवन्धुः। अतो वेदमूलकत्वेन तद्ग्रन्थानां प्रामाण्यम्। अन्यथा स्वातन्त्र्येण प्रामाण्यकल्पनायां पौरुषेयाणाममीषां स्वतन्त्रपुरुषबुद्धिप्रभवत्वस्वीकारेऽलौकिके च धर्मे पुरुषबुद्धेरप्रवृत्तेः भ्रान्त्यादिमूलकत्वपर्यवसानात् अप्रामाण्यमेवैषां स्थापितं स्यात्।

न चैवं प्रत्यक्षवेदमूलकत्वे स्मृतीनां वेदादेव धर्मस्याऽधिगन्तुं शक्यत्वात् मन्वादीनां स्मृतिप्रणयनप्रयासो व्यर्थस्स्यादिति वाच्यम्। नानाशाखागतवाक्योपसंहारेण, अर्थवादोद्धारेण, मन्त्रार्थवादमूलकस्मृतिकल्पनेन, न्यायसिद्धार्थकथनेन च स्मृतिप्रणयनसार्थक्यात्। न हीदानीन्तनामल्पबुद्धीनामस्माकमनेकशाखागतवाक्यान्तराणामुपसंहारे, विध्यर्थवादविवेचने, न्यायसिद्धार्थनिर्धारणे, मन्त्रार्थवादादितो धर्मस्वरूपनिर्णये च सामर्थ्यं वर्वर्ति। अतो न स्मृतिप्रणयनस्य वैयर्थ्यम्। तासु स्मृतिषु काश्चित्

प्रत्यक्षवेदमूलाः; काश्चिदनुमितवेदमूलाः; काश्चिदर्थवादमूलाः; काश्चिन्मन्त्रमूला इत्यवगन्तव्यम् ।

## शिष्टाचारप्रामाण्यनिरूपणम्

एवं शिष्टाचारोऽपि धर्मे प्रमाणम् । शिष्टलक्षणन्तूक्तं *बौधायनेन*—

"शिष्टाः खलु विगतमत्सराः निरहङ्काराः कुम्भीधान्याः[1] अलोलुपाः दम्भदर्पलोभमोहक्रोधवर्जिताः ।

धर्मेणाऽधिगतो येषां वेदस्सपरिबृंहणः ।
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः" ॥ इति ॥

तत्र स्मृतेस्साक्षाद्वेदमूलकत्वम् । शिष्टाचारस्य तु स्मृतिद्वारा । एवञ्च श्रुतेस्साक्षात्प्रामाण्यम् । स्मृतेरेकान्तरितं प्रामाण्यम् । आचारस्य तु द्व्यन्तरितं तत् । उक्तं हि *पूर्वाचार्यैः*—

आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन द्व्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते ॥ इति ॥

अत एव श्रुतिस्मृत्योः विरोधे श्रुतिः प्रबला, स्मृतिस्तु दुर्बला । स्मृत्याचारयोर्विरोधे स्मृतिः प्रबला, आचारो दुर्बल इत्यवधेयम् ।

एवं विध्यर्थवादमन्त्रनामधेयवाक्यशेषसामर्थ्यस्मृत्याचाररूपाण्यष्टौ प्रमाणानि धर्मे प्रवर्त्तन्ते इति सिद्धम् ।

**इति महामहोपाध्यायपण्डितसार्वभौमश्रीवेङ्कटसुब्रह्मण्यापरनामधेय-श्रीचिन्नस्वामिशास्त्रिविरचितायां तन्त्रसिद्धान्तरत्नावल्यां प्रथमपरिच्छेदे विध्यादिनिरूपणं नाम प्रथमः प्रकाशः ।**

---

१ कुम्भीपरिमितमेव धान्यं न ततोऽधिकं येषां ते कुम्भीधान्याः ।

एवं चोदनादिप्रमाणाष्टकसंवेद्ये धर्मे लौकिकं प्रमाणं प्रत्यक्षादिकं न क्रमते ।

## [ प्रमाणलक्षणम् ]

तथाहि—प्रमाकरणं प्रमाणम् । प्रमा चाऽज्ञातयथावस्थितवस्तुविषयकं ज्ञानम् । एवञ्चाऽनधिगताबाधितार्थविषयकज्ञानजनकं प्रमाणमिति सिद्धम् । स्मृत्यनुवादव्यावृत्त्यर्थमज्ञातेति । भ्रमसंशयव्यावृत्त्यर्थं यथावस्थितेति । न च धारावाहिकज्ञानेषु द्वितीयादिज्ञानानामधिगतविषयकत्वेन तेषामप्रामाण्यापत्तिरिति वाच्यम् । तत्र घटादिस्वरूपस्याऽवगतत्वेऽपि द्वितीयादिक्षणानां प्रथमादिक्षणतो भिन्नत्वात् तेषाञ्च पूर्वपूर्वज्ञानाविषयत्वात् तद्विशिष्टत्वेन विषयस्याऽप्यज्ञातत्वात्, कालस्य स्वतः प्रत्यक्षत्वाभावेऽपि तत्तत्पदार्थविशेषणतया षडिन्द्रियवेद्यत्वाभ्युपगमात् । देवदत्तः प्रातःकाले मया दृष्टः, एतावन्तं कालमत्रैव सन् मयाऽवलोकितः इति व्यवहारदर्शनात् । अतस्सिद्धम्—अनधिगताबाधितार्थविषयकज्ञानजनकं प्रमाणमिति ।

## प्रत्यक्षलक्षणम्

तत्र विषयेन्द्रिसम्प्रयोगजन्यं ज्ञानं प्रत्यक्षम् । सम्प्रयोगश्च साक्षात्सम्बन्धः । तेनाऽनुमित्यादीनां मनोजन्यत्वेऽपि तत्र विषयेण सह मनसः साक्षात्सम्बन्धाभावात् नाऽतिव्याप्तिः । सुखादिप्रत्यक्षे तु मनस्स्वतन्त्रमेव प्रवर्त्तत इति तत्राऽपि लक्षणं सङ्गच्छत एव ।

## प्रत्यक्षावान्तरभेदनिरूपणम्

तच्च प्रत्यक्षं द्विविधम्—निर्विकल्पकं सविकल्पकञ्चेति । तत्रेन्द्रियसन्निकर्षानन्तरमेव विषयस्वरूपमात्रग्राहि शब्दानुगमशून्यं यत्संमुग्धाकारं ज्ञानं जायते तन्निर्विकल्पकम् । न हि तदानीं तत्र जातिगुणक्रियादिकल्पनाः क्रमन्ते । अतो जात्यादिकल्पनया शून्यं ज्ञानं निर्विकल्पकम् ।

यत्तु तदनन्तरं शब्दस्मरणसहकृतं जात्यादिविशिष्टवस्तुविषयं 'गौरियं' 'रक्तोऽयं' इत्यादिविशिष्टविज्ञानं तत्कल्पनाविशिष्टत्वात् सविकल्पकमित्युच्यते। बौद्धाः निर्विकल्पकमेवेच्छन्ति, न सविकल्पकम्। केचिच्छाब्दिकास्सविकल्पकमेवेच्छन्ति, न निर्विकल्पकम्। तदुभयमप्यसङ्गतम्। सविकल्पकस्य लोकसिद्धस्याऽपह्नोतुमशक्यत्वात्। यथोक्तम्—

ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता॥ इति।
चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति।
स एव सविकल्पस्य प्रत्यक्षत्वं निवारयेत्॥ इति च।

एवं जात्यादिकल्पनातः पूर्वमुत्पद्यमानस्य सम्मुग्धाकारस्य वस्तुमात्रविषयकस्य निर्विकल्पकज्ञानस्याऽपि निवारणमशक्यमेव।

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥
न विशेषो न सामान्यं तदानीमनुभूयते।
तयोराधारभूता तु व्यक्तिरेवाऽवसीयते॥ इति।

अतो भट्टमतावलम्बिभिरुभयमप्यङ्गीक्रियते—निर्विकल्पकं सविकल्पकञ्च।

---

१ See न्यायबिन्दु by धर्मकीर्ति P. 11, 13, कल्पनापोढमभ्रान्तं प्रत्यक्षम्। अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना, तया रहितम् Chow. edn.

२ See वाक्यपदीय ब्रह्मकाण्ड १२३. Also see तात्पर्यटीका of वाचस्पतिमिश्र P. 125. L. 12. तत्र नामरहितं अविकल्पकं नास्तीति यो विप्रतिपद्यते तन्मतमपाचिकीर्षुरुपन्यस्यति भाष्यकारः। P.126. L. 19. तथा च नाऽविकल्पकं शब्दरहितमस्तीति तात्पर्यार्थः। तथा चाहुः—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते॥ इत्यादि॥

तत्र निर्विकल्पकज्ञानं जात्यादिकल्पनारहितं वस्तुमात्रावगाहीत्युक्तम्। सविकल्पके पञ्चधा विकल्पो भवति—जाति, द्रव्य, गुण, कर्म, नामभिः। तत्र गौरियमिति जातिविकल्पः। दण्डवानिति द्रव्यविकल्पः। नीलोऽयमिति गुणविकल्पः। पाचकोऽयमिति क्रियाविकल्पः। देवदत्तोऽयमिति नामविकल्पः। सोऽयं देवदत्त इति प्रत्यभिज्ञाऽपि नामविकल्प एवांऽन्तर्भवतीति न षष्ठविकल्पाङ्गीकरणमावश्यकम्।

तदिदं प्रत्यक्षं चक्षुरादीन्द्रियजन्यत्वेन चाक्षुष, त्वाच, श्रावण, रासन, घ्राणज, मानसभेदेन षोढा भवति।

## इन्द्रियपरीक्षा

अत एव घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोरूपाणि षडिन्द्रियाणि। घ्राणादीनि पञ्च बाह्यानीन्द्रियाणि। मनस्त्वान्तरम्। तत्र गन्धोपलब्धावसाधारणं करणं **घ्राणम्**। एवं रसोपलब्धावसाधारणं करणं **रसनम्**। रूपोपलब्धावसाधारणं करणं **चक्षुः**। स्पर्शोपलब्धावसाधारणं करणं **त्वक्**। शब्दोपलब्धावसाधारणं करणं **श्रोत्रम्**। तानि च भौतिकान्येव तत्तदसाधारणगुणग्राहकत्वात्। तथाहि—गन्धरसरूपस्पर्शशब्दाः क्रमशः पृथिव्यप्तेजोवायुव्योम्नामसाधारणा गुणाः। तद्ग्राहकत्वाच्च तेषामपि क्रमात् पार्थिवत्वाप्यत्वतैजसत्ववायवीयत्वव्योमीयत्वानि इति [1]नैयायिकाः। वयमपि चतुर्ष्वाद्येषु तथैवाऽङ्गीकुर्मः। श्रोत्रस्य परं दिगात्मकत्वं मीमांसका अभिप्रयन्ति। अध्रिगुप्रैषे श्रोत्रस्य[2] दिश्येव लयश्रवणात्। **"दिशः श्रोत्रे भूत्वा कर्णौ प्राविशन्"** इति श्रुत्यन्तराच्च। उक्तं हि *वार्तिककृता*—

---

१ See न्यायसूत्र अ. १. आ. १. सू. १२. घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः। Also see तात्पर्यटीका of वाचस्पतिमिश्र P. 222. L. 19. घ्राणेनैव पृथिव्या यो गुणविशेषो गन्धस्स गृह्यते; न रसनादिना। एवं रसनेनैनाऽपां यो माधुर्यं गुणविशेषस्स गृह्यते इत्यादि।

२ See अध्रिगुप्रैष. तै. ब्रा. ३. ५. ६.

तस्माद्दिग्द्रव्यभागो यः पुण्यापुण्यवशीकृतः ।
कर्णच्छिद्रपरिच्छिन्नः श्रोत्रं संस्क्रियते च सः ।। इति ।

केश्चित्तु मीमांसकैरपि श्रोत्रस्याऽऽकाशरूपत्वमेव, अत एव तत् आकाशगुणं शब्दमभिव्यञ्जयति । सर्वस्याऽपीन्द्रियस्य स्वीयगुणाभिव्यञ्जकत्वदर्शनादिति कथ्यते । तेषां तु शब्दस्य गुणत्वमभिमतम् ।

## [ मनोनिरूपणम् ]

मनस्तु पृथिव्याद्यन्यतमप्रकृतिकं तेभ्योऽन्यद्वा । सुखाद्यपरोक्षसाधनत्वाच्च मनस्सिद्धिः । तच्चाऽऽन्तरेष्वात्मगुणेष्वेव सुखदुःखादिषु स्वतन्त्रं प्रवर्तते, न बाह्येषु । तत्र तु चक्षुर्द्वारा प्रवर्तते । अत एव तस्याऽन्तरिन्द्रियत्वव्यवहारः । तच्चाऽणुपरिमाणमिति *नैयायिकाः*, गागाभट्टप्रभृतयश्च *मीमांसका* आशेरते । विभ्विति *मानमेयोदयकारः* ।

न च मनसो विभुत्वे आत्ममनस्संयोगानुपपत्तिः । उभयोरपि विभुत्वात् । संयोगस्याऽन्यतरकर्मजत्वनियमादिति वाच्यम् । अजन्यस्यैव विभुद्वयसंयोगस्याऽङ्गीकारात् । न च युगपदनेकज्ञानोत्पत्तिप्रसङ्गः । अन्यतमस्याऽन्यतमप्रतिबन्धकत्वकल्पनात् । अथ वा युगपज्ज्ञानोत्पत्तिरिष्टैव । अत एव एककालावच्छेदेनैवाऽनेकविषयकज्ञानवन्तः अष्टावधानशतावधानादिकं कुर्वन्तोऽद्यत्वेऽपि दृश्यन्ते विपश्चित्प्रवराः । विभुत्वेऽपि मनसः शरीरावच्छेदेनैवेन्द्रियत्वाभ्युपगमान्न बहिर्ज्ञानोत्पत्तिरापादनमर्हति ।

---

१ See वैशेषिकसू. P, 171. ७. १. २३. तदभावादणु मनः । Also उपस्कार by शङ्करमिश्र तस्य विभवस्य सर्वमूर्तद्रव्यसंयोगित्वस्याऽभावादणु मनः । P. 171. Chow. edn. See भाट्टचिन्तामणि by गागाभट्ट P. 16. L. 5 new edn and मानमेयोदय P. 214 Theosophical Publication. Adyar. अन्तरिन्द्रियं विभुपरिमाणमस्पन्दं च मनः इत्यादि ।

## [ इन्द्रियाणां प्राप्यकारित्वम् ]

तानि चेन्द्रियाणि[१] प्राप्यकारित्वाप्राप्यकारित्वभेदेन द्वेधा । तत्र चक्षुःश्रोत्रयोरप्राप्यकारित्वम् । इतरेषां त्रयाणां प्राप्यकारित्वमिति बौद्धाः । सर्वेषां च प्राप्यकारित्वमेव युक्तम्, इन्द्रियत्वाविशेषात् । न हि विषयव्यापनं प्राप्तिः, किन्तु व्यापारमात्रम् । स चाऽस्त्येव त्वग्घ्राणरसनानामिव श्रोत्रचक्षुषोरपि । श्रोत्रं हि कर्णशष्कुल्यवच्छिन्नदिग्रूपं तादृशनभोरूपं वा धर्माधर्मोपगृहीतं स्वदेश एव विभुं शब्दं गृह्णाति । तेजसस्तु विशरणशीलस्य चक्षुर्गोलान्निस्सृतस्य विषयदेशं गत्वैव तद्ग्रहणमिति तयोरपि प्राप्यकारित्वमुपपन्नमेव । अनुद्भूतरूपत्वाच्च तस्य रूपानुपलम्भः ।

## सन्निकर्षनिरूपणम्

इन्द्रियैश्च तैर्विषयस्य ग्रहणे सम्बन्धोऽपेक्ष्यते । स च विषयेन्द्रिययोस्सम्बन्धस्सन्निकर्ष इत्युच्यते । स द्विविधो—लौकिकोऽलौकिकश्चेति । तत्र लौकिकसन्निकर्षस्त्रेधा—संयोगः, संयुक्ततादात्म्यं, संयुक्ततादात्म्यतादात्म्यञ्चेति । तत्र द्रव्यग्रहणे संयोगस्सन्निकर्षः । तन्निष्ठजातिगुणकर्मणां ग्रहणे संयुक्ततादात्म्यम् । भाट्टमते जातिगुणकर्मणां द्रव्येण सह तादात्म्याङ्गी-

---

१ केषां प्राणिनां कानि कानीन्द्रियाणीत्येतत् प्रपञ्चितं प्रमाणमीमांसायां हेमचन्द्राचार्येण । तद्धीत्थम्—स्पर्शनरसनेन्द्रिये कृमि-अपादिका-नूपुरक-गण्डूपद-शंख-शुक्तिका-शम्बूका-जलूकाप्रभृतीनां त्रसानाम् ।

स्पर्शन-रसनघ्राणानि पिपीलिका-रोहणिका-उपचिका-कुन्थु-तुबरक-त्रपुसबीज-कर्पासास्थिका-शतपदी-अयेनक-तृणपत्र-काष्ठहारकादीनाम् ।

स्पर्शन-रसन-घ्राण-चक्षूंषि भ्रमर-वटर-सारङ्ग-मक्षिका-पुत्तिका-दंश-मशक-वृश्चिक-नन्द्यावर्त-कीटक-पतङ्गादीनाम् ।

सह श्रोत्रेण तानि मत्स्य-उरग-भुजग-पक्षि-चतुष्पदानां तिर्यग्योनिजानां सर्वेषां च नारकमनुष्यदेवानामिति ।

कारात्। इदञ्च तादात्म्यं न नैयायिकमतवदत्यन्ताभेदरूपम्। किन्तु भेदसहिष्णुरभेदः। केनचिदंशेन भेदः, केनचिदंशेनाऽभेदः।

उक्तं हि *तन्त्रवार्तिके* आकृत्यधिकरणे–आकृतिव्यक्त्योरत्यन्तभेदाभावात्, कदाचित् व्यक्तिरूपेण द्रव्यमभिधीयते, कदाचित्तु सामान्यरूपेण इति। एवमपूर्वाधिकरणे–क्रियात्मनोरत्यन्तभेदाभावात् इत्युक्तम्। अत्र *न्यायसुधा*–द्रव्यमेव विशिष्टशक्त्युपेतं व्यापारशब्दवाच्यं भवतीत्यनेन न्यायेन क्रियात्मनोरत्यन्तभेदाभावेनेत्यादि। एवञ्च जातिद्रव्ययोः, द्रव्यगुणयोः, क्रियाद्रव्ययोश्च तादात्म्याङ्गीकारात् जातिगुणक्रियाणां प्रत्यक्षे संयुक्ततादात्म्यं सम्बन्धः। यथोक्तं *श्लोकवार्तिके*–

रूपादीनान्तु संयुक्तद्रव्यतादात्म्यमेव नः।
प्रतीतिकारणं तस्मात् न सम्बन्धान्तरस्पृहा॥ इति।

गुणत्वक्रियात्वप्रत्यक्षे संयुक्ततादात्म्यतादात्म्यं सन्निकर्षः। अतः त्रिधैव सन्निकर्ष इति। यदि तु–

एतयैव दिशा वाच्या शुक्लादेरपि नित्यता।
संसर्गमात्रभेदेन स्यात्तत्रापि हि भेदधीः॥
स्वरूपन्तु तदेवेति को जातिं कथयिष्यति।

इति *वार्तिकोक्त*दिशा गुणानामपि शुक्लादीनां नित्यत्वैकत्वे अभ्युपगम्य तत्र न जातिः काचिदङ्गीक्रियेत, तदा सन्निकर्षद्वयमेव न तृतीयस्याऽऽवश्यकतेत्यवधेयम्।

## [ अलौकिकसन्निकर्षनिरूपणम् ]

अलौकिकसन्निकर्षो द्विविधः–सामान्यलक्षणो ज्ञानलक्षणश्चेति। यत्र इन्द्रियसंबद्धव्यक्तिगते सामान्ये ज्ञाते तत्सामान्याश्रयनिखिलव्यक्तीनां

---

१ See विवरणप्रमेयसंग्रह P. 44. L. I. अच्युतग्रन्थमाला edn. भेदाभेदसहमन्योन्याभावविरोधि तादात्म्यम्।

यज्ज्ञानं, तत्सामान्यलक्षणसन्निकर्षेण। सुरभिश्चन्दनखण्ड इति चन्दनखण्डे यत्सौरभज्ञानं तत् ज्ञानलक्षणया प्रत्यासत्त्या। योगजस्तु सन्निकर्षो नाऽङ्गीक्रियते, मानाभावात्। तत्प्रतिपादकस्मृतिपुराणादीनामन्यपरत्वाच्च। अतो द्विविधैवाऽलौकिकी प्रत्यासत्तिरिति भाट्टचिन्तामणौ *गागाभट्टः*।

वस्तुतस्तु सामान्यं नेन्द्रियप्रत्यासत्तिः, मानाभावात्। न च महानसीयधूमेनैव सहेन्द्रियसंयोगात् तत्रैव व्याप्तिग्रहो जात इति पर्वतीयधूमादनुमितिर्न स्यात्। धूमत्वादेः प्रत्यासत्तित्वे तस्याऽपि प्रत्यासन्नत्वात् तत्र व्याप्तिग्रहे ततोऽनुमितिर्भवेदिति वाच्यम्। पर्वतीयधूमेन्द्रियसन्निकर्षदशायां धूमत्वेन गृहीतायाः स्मृतायाश्च व्याप्तेस्तत्र वैशिष्ट्यग्रहसम्भवात्। अतश्च सामान्यप्रत्यासत्तिं विनैवैवमादीनामुपपन्नतरत्वेन सामान्यलक्षणप्रत्यासत्त्यभ्युपगमे न किञ्चित् प्रमाणं पश्यामः। किञ्च सामान्यलक्षणप्रत्यासत्त्यङ्गीकारे 'यत् प्रमेयं तदभिधेयम्' इति व्याप्त्या सर्वस्याऽपि परिच्छिन्नत्वात् सर्वज्ञत्वापत्तिः। न चेष्टा सा। परज्ञानविषयो घटो नवेति संशयानुपपत्तेः। एवमेव ज्ञानलक्षणा प्रत्यासत्तिरपि निराकरणीया। 'सुरभि चन्दन'मित्यादौ चन्दनत्वादिना सौरभाद्यनुमानोपपत्तेः।

## पदार्थनिरूपणम्

प्रसङ्गात् पदार्था निरूप्यन्ते। द्रव्यगुणकर्मसामान्यशक्त्यभावाः षट् पदार्थाः। *प्राभाकरास्तु*—द्रव्यगुणकर्मसामान्यसमवायशक्तिसंख्यासादृश्यरूपानष्टौ पदार्थानभ्युपगच्छन्ति।

## द्रव्यविभागः

तत्र परिमाणाश्रयो **द्रव्यम्**। परिमाणञ्चाऽणुत्वमहत्त्वादि। तच्च द्रव्यं पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनश्शब्दतमोरूपेणैकादशविधम्।

## [ पृथिवीनिरूपणम् ]

तत्र गन्धवती **पृथिवी**। सा मही-महीधर-महीरुहादिरूपा, शरीर-

घ्राणेन्द्रियरूपा च। तच्च शरीरं चतुर्विधं जरायुजाण्डजस्वेदजोद्भिज्ज-भेदात्। जरायुजं मनुष्यमृगादीनाम्। अण्डजं पक्षिसरीसृपादीनाम्। स्वेदजं मशकमत्कुणवृश्चिकादीनाम्। उद्भिज्जं तरुगुल्मादीनाम्। प्राभाकरास्तु त्रिविधमेव शरीरमङ्गीकुर्वन्ति, न चतुर्थमुद्भिज्जम्[१]।

## [ जलनिरूपणम् ]

सांसिद्धिकद्रवत्वाधिकरणं जलम्। तच्च सरित्समुद्रसरःकरकादिरूपं रसनेन्द्रियरूपञ्च। करकाणां जलरूपत्वेऽपि घनीभावोऽदृष्टवशात्, अतिशैत्यसम्बन्धाद्वा।

## [ तेजोनिरूपणम् ]

उष्णस्पर्शवत्तेजः। तत्सूर्यचन्द्रनक्षत्राग्न्यादिरूपं, चक्षुरिन्द्रियरूपञ्च। तत्रोद्भूतानुद्भूताभिभूतभेदेन त्रिविधौ रूपस्पर्शौ। तत्र तेजसि अयःपिण्डादौ चोद्भूतौ रूपस्पर्शौ। इन्द्रिये त्वनुद्भूतौ। सुवर्णेऽभिभूतौ। सुवर्णमपि तैजसमेव। तत्रोष्णस्पर्शानुपलम्भस्तु बलवत्पार्थिवांशावरोधादिति *मानमेयोदयकारः*[२]। *सर्वदर्शनकौमुदीकारास्तु*[३] तस्य पार्थिवत्वमेव साधयन्ति। तैजसत्वसाधकानुमानस्य, सुवर्णं न तैजसं, नैमित्तिकद्रवत्वाधिकरणत्वात्, घृतवत्, इति प्रत्यनुमानात् 'सुवर्णं यदि तैजसं स्यात् द्रवत्वाधिकरणं न स्यात् आलोकव'दिति प्रतिकूलतर्केण च पराहतिमिच्छन्ति।

---

१ See प्रकरणपञ्चिका of शालिकनाथ P. 150. L. 5. Chow. edn. शरीरं जरायुजाण्डजस्वेदजभेदभिन्नं त्रिविधम्। उद्भिज्जं शरीरं न भवत्येव इत्यादि।

२ See मानमेयोदय P. 155. 9. T. P. edn Madras. अभिभूतरूपस्पर्शं तेजः सुवर्णम्। अभिभवस्तु बलवद्भिः पार्थिवरूपादिभिरिति द्रष्टव्यम्, इत्यादि।

३ See सर्वदर्शनकौमुदी. P. 92. L. I. Trivandram Sanskrit Series सुवर्णं च पार्थिवम्—परिशेषात् पार्थिवमेव सुवर्णमिति सिद्धम्।

## [ वायुनिरूपणम् ]

अरूपत्वे सति स्पर्शवान् **वायुः** । स झंझामन्दनिश्वासवातादिरूपः । त्वगिन्द्रियरूपश्च । पृथिव्यप्तेजांसीव वायुरपि प्रत्यक्ष एव । शीतादिषु स्पर्शविशेषेषु वृक्षादिकम्पनेषु चोपलभ्यमानेषु योऽयमनुगतप्रत्ययः शीतो वायुः, उष्णो वायुः, महान् वायुरित्यादिः, तत्र वायुद्रव्यस्यैकस्य प्रत्यभिज्ञायमानस्याऽपलपितुमशक्यत्वेन वायोरपि प्रत्यक्षत्वाभ्युपगमात् । **एतेन** अनुष्णाशीतस्पर्शलिङ्गकानुमानगम्यो वायुरिति नैयायिकमतं प्रत्युक्तम् । अतस्त्वगिन्द्रियप्रत्यक्षसिद्धो वायुरिति सिद्धम् । तस्य च वायोः स्वभावाददृष्टविशेषाद्वा स्वारसिकं तिर्यग्गमनम् । पार्थिवादिद्रव्येण वा वाय्वन्तरेणाभिघाताद्वा भ्रमणोर्ध्वगमनादयः । तत्र शरीरादिधारणहेतुः वायुविशेष एव प्राणसंज्ञकः । स एव व्यापारभेदात् पञ्चधा दशधा चोच्यते । तत्र प्राणापानव्यानोदानसमानभेदात् पञ्चधा, नागकूर्मकृकरदेवदत्तधनञ्जयभेदाद्दशधा ।

## [ आकाशनिरूपणम् ]

विशिष्टावकाशाश्रय **आकाशः** । स च नित्यः । एकस्सर्वव्यापी सन्नपि उपाधिभेदात् घटाकाशमठाकाशादिभेदव्यवहारं भजते । न च शब्दगुणकत्वमाकाशस्य लक्षणम् । शब्दस्य द्रव्यात्मकत्वात् । साधयिष्यते चैतदुपरिष्टात् ।

## [ कालनिरूपणम् ]

सर्वाधारः **कालः** । सोऽपि विभुरेक एव । परं कलाकाष्ठादिभेदेनौपाधिकं भेदं भजते । तत्राऽक्षिपक्ष्मणोः स्वाभाविकपरिस्पन्दापेक्षितः कालो निमेषः । तेऽष्टादश काष्ठा इत्युच्यन्ते । तास्त्रिंशत्कलाः । तास्त्रिंशन्मुहूर्त्ताः, ते च पञ्चदशाऽहोरात्राः । तैस्त्रिंशता चैको मासः । तैश्च मासैर्द्वादशभिस्संवत्सर इत्यवधेयम् ।

## [ दिङ्निरूपणम् ]

एवं दिगपि एका नित्या च । परं पूर्वापरादिव्यवहारमुपाधिवशात् कर्णशष्कुल्यवच्छेदाच्च श्रोत्रसंज्ञां लभते । तत्र पृथिव्यादीनि वाय्वन्तानि साक्षादेव प्रत्यक्षवेद्यानि । कालाकाशदिशां तु विशेष्यतया प्रत्यक्षाविषयत्वेऽपि विशेषणतया प्रत्यक्षविषयता । यथा प्रातः काले देवदत्तः पूर्वस्यां दिशि दृष्टः, आकाशे डयमाना विहगा मयाऽवलोकिता इत्यादि बोध्यम् ।

## [ आत्मनिरूपणम् ]

आत्मा चैतन्याश्रयः । स च देहेन्द्रियज्ञानसुखेभ्यो व्यतिरिच्यते । नानाभूतो विभुर्नित्यः भोगस्वर्गापवर्गभाक् । तथा हि—न तावद्देहस्याऽऽत्मत्वम् । तथात्वे आत्मगुणानां सुखदुःखादीनां यावच्छरीरभावित्वप्रसङ्गात् । यावच्छरीरं तावदस्य गुणा रूपादयः परिदृश्यन्ते । यदि सुखादयोऽपि गुणाः शरीरस्यैव, तर्हि यावच्छरीरं तत्रैवाऽवस्थितास्स्युः । तथा न दृश्यते । मृतशरीरे तेषामदर्शनात् । अतस्तेषां शरीरातिरिक्तेन केनचिदाश्रयेण भाव्यम् । स एव देहातिरिक्त आत्मा ।

ननु 'स्थूलोऽहं' 'कृशोऽहं'मित्यादिप्रत्यक्षबलात् स्थौल्यादिसामानाधिकरण्यवशाच्चाऽहंप्रत्ययगम्यमात्मतत्त्वं शरीरमेवेति चेत्—न; सर्वगतस्याऽऽत्मनः स्थौल्याद्यनुपपत्तेः । 'ममेदं शरीर'मिति भेदेनाऽबाधितव्यवहारात् । अभेदव्यवहारस्य भ्रान्त्याऽपि संसर्गदोषवशेनोपपत्तेः ।

यथाऽऽहुः—

गुरुः स्थूलः कृशो वाऽहमिति देहेऽपि या मतिः ।
भ्रान्तिस्सा भेदरूपं हि गुरु मे तदितीक्ष्यते ॥ इति ।

न चेन्द्रियाणामात्मत्वम् । तत्र बाह्येन्द्रियाणां भौतिकत्वात् एकैकस्याऽऽत्मत्वे 'योऽहमद्राक्षं सोऽहं स्पृशामी'ति एकत्वव्यवहारानुपपत्तेः, स्मरणाद्यसम्भवाच्च नेन्द्रियात्मवादस्साङ्गत्यमुपलभते । नाऽपि ज्ञानात्मवादस्सङ्ग-

च्छते। तस्य क्षणिकत्वात् 'योऽहं बाल्ये दुःखमन्वभूवं सोऽहं सुखमिदानीमनुभवामी'ति प्रत्यभिज्ञानात्। क्षणिकज्ञाने तदनुपपत्तेः। नित्यज्ञानस्य कस्यचिदसम्भवात्। ज्ञानवानहमिति सर्वजनीनप्रतीतेश्च।

एवं सुखादिभिन्नत्वमप्यात्मनस्साधनीयम्। 'अहं सुखी' 'अहं दुःखी' इत्येव सर्वत्र व्यवहारदर्शनात् 'अहं सुखम्' 'अहं दुःख' मिति व्यवहारस्य क्वचिदप्यश्रवणात् सुखाद्यतिरिक्त एव सुखदुःखज्ञानाधिकरणमात्मपदार्थ इत्यध्यवसीयते। स च प्रतिशरीरं भिन्नो विभुर्नित्यश्च।

न चैक एव सन्नपि स शरीराद्युपाधिभेदात् नानेव व्यपदिश्यते भ्रान्तिवशादिति वाच्यम्। आत्मन एकत्वे यथा करणभेदेन कर्तुरेकत्वेऽपि चक्षुषा दृष्टमर्थं मनसा स्मरति, त्वचा प्रत्यभिजानाति तथा देवदत्तशरीरस्थेनाऽऽत्मना दृष्टमर्थं यज्ञदत्तः प्रत्यभिजानीयात्। एकस्मिन् सुखिनि दुःखिनि वा सर्वेषामपि सुखदुःखानुसन्धानं च स्यात्। न च करणभेदादननुसन्धानमिति वाच्यम्। इन्द्रियभेदेऽपि 'योऽहमपश्यं सोऽहं शृणोमि' इत्यनुसन्धानदर्शनात्। न च शरीरभेदात्तन्नेति वाच्यम्। शरीरभेदेऽपि जातिस्मराणां पूर्ववृत्तस्मरणदर्शनात्। अतस्स्मर्तव्यास्मरणात् प्रतिशरीरं भिन्ना एवाऽऽत्मानः इत्यवसीयते। सति चैवं यानि **'एको देवस्सर्वभूतेषु गूढः' 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः'** इत्यादीनि श्रुतिपुराणादिवचनानि तानि आत्मभेदबोधकप्रमाणैः प्रत्यक्षादिभिर्विरोधात् व्यापकत्वबोधनपरतया नेयानि। अतस्सिद्धमात्मा प्रतिक्षेत्रं भिन्न इति।

## [ आत्मनो विभुत्वनिरूपणम् ]

नन्वयमणुः शरीरपरिमाणो वा किं न स्यादिति वाच्यम्। अणुपरिमाणत्वे युगपच्छिरसि पादयोश्च वेदनानुपपत्तिः। मध्यमपरिमाणत्वे सावयवस्स्यात्। द्विविधमेव निरवयवं द्रव्यम्—अणु विभु वा। मध्यमपरिमाणाश्च सर्वे सावयवा दृष्टाः। एवञ्चाऽऽत्मनो मध्यमपरिमाणत्वाङ्गीकारे

सावयवत्वापातात् अनेकावयवकल्पनाप्रसक्तेः, तावतां चाऽन्यूनानधिकानां हस्तिपिपीलिकादिशरीरप्रवेशानुरोधेन सङ्कोचविकासकल्पनाप्रसङ्गात् सावयवानाञ्चाऽवयवोपचयादिना वृद्धिह्रासनाशानां कल्पनाप्रसङ्गाच्च विभुत्वमेव युक्तम्। एवं "अविनाशी वा अरेऽयमात्मा" इत्यादिश्रुतिभिः–

"नित्यस्सर्वगतस्थाणुरचलोऽयं सनातनः"।

इत्यादिस्मृतिभिश्च नित्यत्वमस्य। अयमेव यागदानतपोहोमादिनिखिलकर्मणां कर्ता अशनपानविहरणादिलौकिकव्यापाराश्रयः तत्तत्कर्मजन्यस्वर्गनरकादिनिखिलफलभोक्ता च। न तु प्रकृतेस्त्रिगुणाया अन्यस्य करणस्य वा कर्तृत्वम्, तेषां जडत्वात्। न हि चेतनव्यापारप्रवेशमन्तरा क्वचिदपि जडस्य कर्तृत्वं दृष्टम्। अत आत्मैव कर्ता भोक्ता च।

स च स्वर्गस्तत्तत्क्रियाफलभूतः निरतिशयसुखविशेषो वा देशविशेषरूपो वा। सुखविशेषरूपत्वे–

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्॥

इत्यादीनि प्रमाणानि। देशविशेषरूपत्वे "स्वर्गो लोको ज्योतिषाऽऽवृतः" "मोदते स्वर्गलोके" इत्यादीनि प्रमाणानि। मनस्तु प्रसङ्गात्पूर्वमेवेन्द्रियनिरूपणावसरे निरूपितम्।

## [ तमोनिरूपणम् ]

चक्षुर्मात्रग्राह्यं आलोकाभावप्रकाश्यकृष्णरूपं **तमः**। तत्तु भावरूपमेव, न तु न्यायमत इवाऽऽलोकाभावरूपम्। गुणकर्मविशिष्टतया प्रतीयमानत्वात्। कृष्णं तमः, चलति तम, इति निष्प्रतियोगिकतया प्रतीयमानत्वाच्च। अभावस्सर्वोऽपि सप्रतियोगिक एव प्रतीयते–घटाभावः, पटाभावः इति। तमसो यद्यभावरूपत्वं तर्हि आलोकभाव इति प्रतीत्या

भाव्यम्। न हि तथा प्रतियन्ति प्रत्येतारः। तमो न रूपिद्रव्यम्, आलोकाभावसहकृतचक्षुर्ग्राह्यत्वात्, आलोकाभाववत्, इति नैयायिकानुमानं न युक्तम्। पक्षदृष्टान्तयोर्भेदाभावात्। "नासीत्तमो ज्योतिरभून्न चाऽन्यत्" इति ज्योतिषा सहैव तमसो लयाभिधानात्। अन्तर्यामिब्राह्मणे यस्य तमश्शरीरं, यस्य तेजश्शरीरं, इति तेजस इव तमसोऽपि ब्रह्मशरीरत्वाभिधानात्। 'तमस्ससर्ज भगवान्' इति तमसः पृथक् सृष्ट्यभिधानाच्च। उक्तञ्च *तत्त्वसारे*—

तमो नाम द्रव्यं बहुलविरलं मेचकचलं
प्रतीमः केनाऽपि क्वचिदपि न बाधश्च ददृशे।
अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते
निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात्॥ इति।

अतो द्रव्यान्तरमिदं वायुवत्, नीलगुणञ्च। एतावान् विशेषः— वायुररूपः स्पर्शवान्। इदन्तु अस्पर्शं रूपवदिति।

## शब्दस्य द्रव्यत्वनिरूपणम्

श्रोत्रेन्द्रियग्राह्यश्शब्दः। स द्विविधो-वर्णात्मको ध्वन्यात्मकश्चेति। तत्र वर्णात्मकस्य द्रव्यत्वं, विभुत्वं, नित्यत्वञ्चाऽऽत्मवत्। न तु गुणत्वम्। गुणस्य सर्वत्र साश्रयत्वप्रतीतेः, शब्दस्य च निराश्रयतयैवोपलम्भात्। शब्दो द्रव्यं, साक्षादक्षसम्बन्धग्राह्यत्वात्, घटवत्, इत्यनुमानेन तस्य द्रव्यत्वसिद्धेः। यथोक्तम्—

वर्णात्मकास्तु ये शब्दा नित्यास्सर्वगतास्तथा।
पृथक्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः॥ इति।

एवं वर्णा नित्याः, ध्वनिभिन्नत्वे सति श्रावणत्वात्, शब्दत्ववत्, इत्यनुमानात्, सोऽयं गकारः, स एवाऽयं गकार इति अबाधितप्रत्यभिज्ञाबलाच्च नित्यत्वसिद्धिः। न च सेयं दीपज्वालेतिवत्प्रत्यभिज्ञा भ्रान्तिमू-

लिकेति वाच्यम् । भ्रान्तेरसिद्धेः । ज्वालैकत्वप्रत्यभिज्ञानन्तु ज्वालाया विशरणस्य प्रत्यक्षतोऽनुभूयमानत्वात् तेन चाऽवयवविशरणस्याऽप्यनुमेयत्वात् । विश्लिष्टावयवस्य ह्यवयविनोऽवश्यंभावी विनाशः । विनष्टे च पूर्वस्मिन् प्रदीपे पश्चात्तनोऽवश्यं प्रदीपान्तरमेव भवतीति तत्र पूर्वोत्तरप्रदीपयोर्भेदे निश्चिते प्रत्यभिज्ञा सादृश्यनिमित्तेति कल्प्यते । प्रकृते तु तथा कल्पनायां न किञ्चित् प्रमाणमस्तीति सिद्धश्शब्दो वर्णात्मको नित्यो विभुरिति ।

ध्वन्यात्मकस्तु शब्दो गुणोऽनित्यश्च । स एव चाऽभिव्यञ्जको वर्णात्मकस्य शब्दस्य । तस्य च वायुगुणत्वमेव युक्तम् । वायोरभिघातेन तस्य जायमानत्वात् । भाष्येऽपि तथैव कथनाच्च-'**अभिघातेन प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्ति**' इत्यादिना । '**संयोगविभागा नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जन्तो नादशब्दवाच्या**' इति च । एवञ्च वायोस्संयोगविशेष एव ध्वनिनादशब्दवाच्य इति भाष्यकारमते पर्यवस्यति इति ।

एवं निरूपितमेकादशविधं द्रव्यम् ।

*इति द्रव्यनिरूपणं समाप्तम् ।*

**इति तन्त्ररत्नावल्यां प्रथमपरिच्छेदे प्रमाणलक्षणादिनिरूपणं नाम द्वितीयप्रकाशः ।**

---

## गुणनिरूपणम्

अथ गुणा निरूप्यन्ते । ते तु रूपरसगन्धस्पर्शसंख्यापरिमाणसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषप्राकट्यध्वनिसंस्कारभेदादेकविंशतिः ।

## रूपनिरूपणम्

तत्र रूपं चक्षुरिन्द्रियमात्रग्राह्यम् । तत् पृथिव्यप्तेजोन्धकारेषु वर्त्तमानम् । तच्च शुक्लनीलपीतरक्तभेदाच्चतुर्विधम् । जगतीतलवर्त्येकमेव शुक्लादि नित्यञ्च । संसर्गभेदेनाऽतिशुक्लमतिनीलमित्यादिप्रतीतिः । अतो न शुक्लत्वादिजात्यङ्गीकारे प्रमाणमस्ति । यथाऽऽहुः—

एतयैव दिशा वाच्या शुक्लादेरपि नित्यता ।
संसर्गमात्रभेदेन स्यात्तत्राऽपि हि भेदधीः ॥
स्वरूपन्तु तदेवेति को जातिं कल्पयिष्यति ? ॥ इति ॥

अत एव चित्ररूपमपि न पृथगङ्गीक्रियते मीमांसकैः । अवयवगतरूपेणैव तदुपपत्तेः । उक्तं हि *पार्थसारथिमिश्रैः* 'यत्राऽपि नानारूपैस्तन्तुभिरारभ्यते पटस्तत्राऽपि त एव वर्णाः पटगताः प्रतीयन्ते, न रूपान्तरम्' इति । 'ततश्चित्राख्यमेकमेव लोकविरोधादेवाऽयुक्तमङ्गीकर्तुम्' इति च । तत्र सलिलजलजशङ्खशुक्तिशशाङ्कादीनां रूपविशेषाः शुक्लभेदाः । सुवर्णहरितालहरिद्रादीनां पीतभेदाः । मरकतमरुवकजलधितिमिरतमालदूर्वादीनां कृष्णभेदाः । हरितनीलौ कृष्णस्यैव प्रकारान्तरे । द्विविधमेव शुक्लं भास्वरमभास्वरञ्चेति । तेजसि भास्वरम् । पृथिव्यां बहुविधमभास्वरम् । तेजसि शुक्लभास्वरमिति नैयायिकाः । वयन्तु—यदग्नेरोहितं रूपं इति श्रुतिबलात् तेजसि रोहितरूपमेवाऽभ्युपगच्छामः ।

## रसनिरूपणम्

रसनेन्द्रियग्राह्यो रसः । स मधुराम्ललवणतिक्तकटुकषायभेदात् षड्विधः । पृथिवीजलवृत्तिः । इक्षुक्षीरगुडादिरसाः मधुरभेदाः । लिकुचचिञ्चामलकादिरसा अम्लभेदाः । सैन्धवलवणाब्विकारादिरसाः लवणभेदाः । शुण्ठीमरीचिसर्षपादिरसाः कटुभेदाः । किंपाकनिम्बादि-

रसास्तिक्तभेदाः। हरीतकीविभीतकादिरसाः कषायभेदाः। तिक्तावान्तरभेद एव कटुः। अत एव लौकिका मरीचिरसं तिक्त इत्येव व्यवहरन्ति इति केचित्।

## गन्धनिरूपणम्

घ्राणेन्द्रियमात्रग्राह्यो **गन्धः**। स सुरभ्यसुरभिभेदेन द्विविधः। चन्दनमृगमदमल्लिकादिगन्धास्सुरभिभेदाः। पूतिविस्रादिगन्धा असुरभिभेदाः। अयञ्च पृथिवीमात्रवृत्तिः। जलवाय्वादिषु गन्धद्रव्यसंसर्गात्तदुपलम्भः। अयो दहतीतिवत्।

## स्पर्शनिरूपणम्

स्पार्शनेन्द्रियमात्रग्राह्यः **स्पर्शः**। शीतोष्णानुभयात्मकभेदात् स त्रिविधः। सलिले शीतः, दहने उष्णः, क्षितिपवनयोरनुष्णाशीतश्च स्पर्शः। स पृथिव्यां पाकजः। दहनपवनयोरपाकजः।

## संख्यानिरूपणम्

एकत्वादिव्यवहारहेतुस्सङ्ख्या। सा पुनरेकत्वादिपरार्धपर्यन्ता। तां द्रव्यमात्रनिष्ठां केचिदिच्छन्ति। अपरे तु द्रव्यगुणादिनिखिलपदार्थवर्तिनीम्। तत्र त्रीणि रूपाणि, षड्रसाः, एका जातिरिति व्यवहारस्तेषां हेतुः। *प्राभाकरास्तु* शक्तेरिव संख्यायाः पदार्थान्तरत्वमिच्छन्ति।

## परिमाणनिरूपणम्

परिमाणप्रत्ययविषयः **परिमाणम्**। तच्चतुर्विधम्—अणुमहद्ध्रस्वदीर्घभेदात्। चत्वार्यपीमानि प्रतियोगिनिरूपितान्येव। इदमितोऽणु, तदस्मादणु, एतत्ततो दीर्घं, तदमुतो ह्रस्वमित्येव व्यवहारदर्शनात्।

## [ पृथक्त्वखण्डनम् ]

इदमस्मात्पृथगिति पृथक्त्वव्यवहारकारणं **पृथक्त्वम्**। तदपि गुण इति काणादाः, तन्न। यतो भेदमात्रान्नातिरिच्यते तत्र तत्त्वान्तरम्। भेदो

यावत्प्रतियोगिकः तावत्प्रतियोगिकस्यैव पृथक्त्वस्याऽपि दर्शनात् । पृथक्पदस्य भेदपदेन सह प्रयोगादर्शनाच्च । अतो भेदमात्रमेव पृथक्त्वम् ।

## संयोगनिरूपणम्

इमौ संयुक्ताविति प्रत्ययनिमित्तं संयोगः । स द्विविधः—कार्यो नित्यश्च । विभूनां व्योमकालाकाशात्ममनआदीनां परस्परं संयोगो नित्यः । परिच्छिन्नपरिमाणयोः द्रव्ययोः उभयप्रेरणादन्यतरप्रेरणाद्वा यो जायते सोऽनित्यस्संयोगः । यथा मेषयोः, स्थाणुश्येनयोर्वा । यत्त्वत्र मानमेयोदयकारैः[1] संयोगजस्संयोगोऽपि नैयायिकवदङ्गीकृतः, स भाट्टसिद्धान्तविरोधादुपेक्षणीयः । यथोक्तं मिश्रैः—एतेन संयोगजसंयोगो निरस्तो वेदितव्य इति । "यथा देवदत्तसंयोग एव तस्मिन् कुण्डलिनि जाते कुण्डलिसंयोगो भवति । यथा तन्तुरीसंयोग एव तन्तौ पटभावमापन्ने पटतुरीसंयोगो भवति, न संयोगान्तरं, प्रतीत्यभावात्" इति च । प्राभाकरास्तु संयोगजसंयोगमङ्गीकुर्वन्ति । यथोक्तं शालिकनाथेन अन्यतरकर्मजः, उभयकर्मजः, संयोगजश्चेति ।

## विभागनिरूपणम्

एवं विभक्तप्रत्ययनिमित्तं विभागः । स तु परिच्छिन्नद्रव्यमात्रवृत्तिः । तस्याऽपि संयोगवदेव द्वैविध्यं बोद्धव्यम् । न तु त्रैविध्यम् ।

## परत्वापरत्वनिरूपणम्

दिक्कालापेक्षया परापरधीहेतुगुणौ परत्वापरत्वे । दूरस्थे प्रतीयमानं परत्वम् । समीपस्थे प्रतीयमानमपरत्वञ्च दिक्कृतम् । वृद्धे प्रतीयमानं परत्वं तरुणे प्रतीयमानमपरत्वं च कालकृतम् ।

---

१ See मानमेयोदय P. 246. L. 7 T. P. edn. Madras.

## गुरुत्वनिरूपणम्

स्वतःपतनहेतुर्गुरुत्वम् । पृथिवीजलवृत्ति । केचित्तु नास्ति पृथिवीसलिलस्वरूपातिरिक्तं गुरुत्वम् । स्वरूपादेवाऽप्रतिबद्धात्तयोः पतनसिद्धिः । स्वभावादेव ह्यधिकगुरुत्वस्याऽपि पतनहेतुत्वम् । उक्तं च—**अधःपतनस्वभावात्म गुरुत्वम् । तदभावो लघुत्वम्** इति ।

## द्रवत्वनिरूपणम्

द्रवत्वप्रत्ययविषयो द्रवत्वम् । तच्च स्यन्दननिदानम् । तद्द्विविधं सांसिद्धिकपाकजभेदात् । सलिले सांसिद्धिकम् । पृथिव्यां घृतजत्वादौ पाकजम् । सुवर्णस्याऽपि पार्थिवत्वमस्माभिर्निरूपितं पूर्वम् । अतो न तेजसि द्रवत्वाङ्गीकरणावश्यकता ।

## स्नेहनिरूपणम्

पांस्वादिसङ्ग्रहणहेतुस्स्नेहः । स जलमात्रवृत्तिः । केचित्तु द्रवत्वमेवेदं चूर्णादिसङ्ग्राहकम् । कठिनतामापन्नस्य करकादेस्स्नेहविशिष्टस्याऽपि चूर्णादिसङ्ग्राहकत्वादर्शनात् । तस्यैव च द्रुतस्य तैलादेः सङ्ग्राहकत्वदर्शनाच्च । अतोऽन्वयव्यतिरेकाभ्यां द्रवत्वमेव पिण्डीभावकारणमित्यभ्युपगन्तव्यं भवति । अतो न तदर्थं स्नेहाङ्गीकरणमिति वदन्ति ।

## बुद्धिनिरूपणम्

सर्वव्यवहारकारणं बुद्धिः । सा पुनरर्थप्रकाशनापरपर्यायप्राकट्यान्यथानुपपत्तिगम्या । प्राकट्यस्वरूपं त्वग्रे निरूपयिष्यते । ज्ञानं हि सकर्मकं स्वकर्मभूतेऽर्थे फलं जनयति पाकादिवत् । तच्च फलमैन्द्रियकं प्रत्यक्षमित्युच्यते । लिङ्गादिजन्यं तु परोक्षमिति । तदेव फलं कार्यभूतं स्वकारणभूतं विज्ञानं कल्पयति । अथवा ज्ञानजन्योऽर्थगतः कश्चिदतिशयविशेषो ज्ञानं कल्पयति । उक्तं हि *न्यायरत्नाकरे*—**ज्ञानजन्योऽर्थगतः कश्चिदतिशयः प्रकाशनभासनादिपर्यायवाच्यः । स च पाकजन्यौदना-**

**गतातिशयवदनवगतेऽपि ज्ञाने शक्यतेऽवगन्तुम्। अतो ज्ञानस्य कल्पकः** इति। तच्च फलं संविदादिपदाभिधेयम्। ताञ्च संविदं स्वप्रकाशां मन्यन्ते *प्राभाकराः*। उक्तं हि *शालिकनाथेन*—**सर्वाश्च प्रतीतयस्स्वयंप्रत्यक्षाः प्रकाशन्ते। तासां च युक्तमेव स्वात्मनि प्रत्यक्षत्वं, मानत्वं चे** त्यादि। तदिदमनुपपन्नम्। अर्थावभाससमये संविदोऽप्रकाशमानत्वात्। सर्वो हि पुरुषः 'अयं घटः' इत्यर्थविषयकमेव प्रकाशमनुभवति। न संविद्विषयकम्। प्रकाशमानस्यैव च प्रत्यक्षत्वं युक्तम्, नाऽप्रकाशमानस्य। अत एवोक्तं *शबरस्वामिना*—**न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते। ज्ञाते त्वनुमानादवगच्छति** इति। अतो न संविदः प्रत्यक्षत्वम्, किन्तु अनुमानगम्यतैव। संवित् न प्रत्यक्षा, वस्तुत्वात्, घटवत्, इत्यनुमानेन तस्याः प्रत्यक्षत्वनिराकरणात्।

*तार्किकास्तु* सुखादिवन्मानसप्रत्यक्षवेद्यत्वमङ्गीकुर्वन्ति ज्ञानस्य। तदर्थं तेऽनुमानमपि प्रयुञ्जते—ज्ञानं प्रत्यक्षम्, क्षणिकात्मविशेषगुणत्वात्, सुखादिवत्, इति। तदपि न; सुषुप्त्यवस्थायां विद्यमाने प्राणनक्रियानिमित्ते प्रयत्ने प्रत्यक्षत्वाभावेन व्यभिचारात्। अतो न बुद्धिः प्रत्यक्षा, किन्तु ज्ञाततानुमेयैवेति सिद्धम्।

## सुखादिनिरूपणम्

इतरेच्छानधीनेच्छाविषयस्सुखम्। इतरद्वेषानधीनद्वेषविषयो दुःखम् सुखदुःखेच्छाद्वेषप्रयत्ना आत्मैकनिष्ठाः। तच्च सुखमैहिकामुष्मिकभेदात् द्विविधम्। स्रक्चन्दनवनितादिसम्पर्कजन्यं रूपरसादिविषयेन्द्रियसम्बन्धजन्यं चेह लोके भोग्यम्। आमुष्मिकन्तु लोकान्तरभोग्यम्। मोक्षसुखञ्चैतदतिरिक्तमग्रे निरूपयिष्यते। एवं दुःखमपि ऐहिकामुष्मिकभेदेन द्विप्रकारम्। तत्रैहिकमाध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधम्। आमुष्मिकन्तु महारौरवादिजन्यम्।

## इच्छादिनिरूपणम्

ममेदं भूयादित्यादिकः **सङ्कल्प इच्छा**। मम मास्तु इत्यादिको **द्वेषः**। अनुभवजन्यः स्मृतिहेतुर्वासनाख्य**स्संस्कारः**। स चाऽऽत्मनिष्ठस्तत्तद्विषयानुभवानन्तरमुत्पद्यमान आत्मनि वर्तमानः उद्बोधकसामग्रीवशात्कदाचिदुद्बुद्धः पूर्वानुभूतविषयविषयिणीं स्मृतिं जनयति। वेगस्थितस्थापकयोः न संस्कारत्वम्। वेगस्य कर्मविशेषानतिरेकात्। स्थितस्थापकस्य संस्थानविशेषरूपत्वाच्च।

यत्तु लौकिकवैदिकभेदेन द्वैविध्यमुक्तं संस्काराख्यस्य गुणस्य, तदपि न युक्तम्। प्रोक्षणादिरूपसंस्कारस्य क्रियारूपत्वात् तज्जन्यातिशयविशेषस्याऽपूर्ववत् योग्यतारूपशक्तावेवाऽन्तर्भावात्। अतो वासनाख्य एक एव संस्कारो गुणत्वेनाऽङ्गीकर्तुं युक्तः।

## प्राकट्यनिरूपणम्

**प्राकट्यं** ज्ञानजन्यो विषयनिष्ठो गुणः। स च ज्ञाततताविषयताप्रकाशापरपर्यायः। न च तत्र प्रमाणाभावः। लौकिकव्यवहारस्यैव प्रमाणत्वात्। अस्ति हि लोके व्यवहारः—घटो ज्ञायते, घटः प्रकाशते, घटो भातीति। स च व्यवहारः स्वोपपत्तये प्रकाशविशिष्टमर्थमवकल्पयति। स एव प्रकाशः प्राकट्यमित्युच्यते। स च न ज्ञानस्वरूपः, विषयगतत्वेन प्रतीतेः। ज्ञानस्याऽऽत्मगतत्वात्। नाऽपि विषयरूपः। विशिष्टज्ञानसमूहालम्बनयोरवैलक्षण्यापत्तेः। अत उभयातिरिक्तस्सोऽभ्युपेतव्यः। अत एव ज्ञानजन्यज्ञाततावद्घटमहं जानामीत्यादौ घटादेः कर्मत्वमुपपद्यते। अतोऽतिरिक्तं प्राकट्यम्। तेनैव ज्ञानमनुमीयते। ध्वनेस्तु वायुगुणत्वं पूर्वमेव निरूपितम्। एवं मीमांसकमते एकविंशतिर्गुणा निरूपिताः।

अत्र कैश्चित् शक्तिप्रयत्नादृष्टपृथक्त्वानामपि गुणत्वेन परिगणनं कृतम्। तत्त शक्तेः पदार्थान्तरत्वस्वीकारात्, प्रयत्नस्य भावनारूपत्वेन

क्रियात्वात्, अदृष्टस्य यागादिशक्तावेवाऽन्तर्भावेन, पृथक्त्वस्य भेदानतिरेकाच्च नाऽस्माभिर्गुणतया गणनं कृतं तेषाम्।

*इति गुणनिरूपणम्।*

---

## कर्मनिरूपणम्

अथ कर्म निरूप्यते। तच्चलतीतिप्रत्ययविषयः। तच्च चलनात्मकमेकं प्रत्यक्षं च भट्टमते। चलतीत्यपरोक्षतयाऽवभासात्। *प्राभाकरास्तु*[1] कर्म न प्रत्यक्षम्, किन्तु संयोगविभागाभ्यामेवाऽनुमेयम्। तथाहि—द्रव्यनिष्ठौ संयोगविभागावेव प्रत्यक्षेण गृह्येते। ताभ्यामागन्तुकाभ्यामेवाऽऽगन्तुकं कारणमनुमीयते। तदेव कर्मेति। तथोक्तम्—

**परोक्षं कर्म कर्मत्वादादित्यगतकर्मवत्।**
**अक्षतद्भावभावित्वं क्षीणं लिङ्गस्य दर्शने॥** इति।

तन्न; अतिप्रसङ्गात्। संयोगविभागाभ्यां कर्मानुमाने भूधरजलधरसंयोगेन भूधरेऽपि कर्मानुमानप्रसङ्गात्। यदि विभागपूर्वकेण संयोगेनैव कर्मानुमानमित्युच्येत तर्हि जलधरान्तरेण वियुज्यमाने जलधरान्तरेण च संयुज्यमाने महीधरे कर्मानुमानं प्रसज्येत। चलति पचतीतिवर्तमानबोधोऽपि न स्यात्। यदि तु वर्तमानसंयोगविभागावपेक्ष्य तथा प्रयोगः तदा चलित्वा स्थितेऽपि चलतीतिवर्तमानप्रतीतिप्रसक्तिः। विभागसंयोगयोस्तदानीं वर्तमानत्वात्। अस्माकन्तु सत्ताक्षण एवेन्द्रियेण गृह्यते। तावतैव च वर्तमानव्यपदेशोपपत्तिः। यथोक्तं *मिश्रैः*—**अतो नाऽनुमेयं कर्म। किमिदानीं नास्त्येव क्रियातत्त्वम्। अस्ति प्रत्यक्षावगमात्** इति।

*इति कर्मनिरूपणम्।*

---

१ See प्रकरणपञ्चिका P. 78. L. 10. Chow. edn. किञ्चिच्चादृष्टस्वलक्षणं यथा कर्मादिकम्।

## जातिनिरूपणम्

अथ जातिर्निरूप्यते । तत्राऽयं कौमारिलस्सिद्धान्तः—

**जातिर्व्यक्तिगता नित्या प्रत्यक्षा सर्वगाऽपि वा ।**
**व्यक्तितादात्म्यमापन्ना व्यक्त्यभिव्यक्तिशालिनी ॥** इति ।

सर्वेष्वपि हि वस्तुषु 'इयं गौः' 'इयमपि गौः' 'अयमश्वः' 'अयमप्यश्वः' इति सकलगवादिव्यक्तिष्वनुवृत्तं विजातीयाश्वादिभ्यो व्यावृत्तं व्यावृत्तानुवृत्ताकारं देशान्तरकालान्तरेष्वबाधितमुत्पद्यते प्रत्यक्षमित्यविवादम् । तदेव प्रत्यक्षं सामान्यविशेषात्मना द्व्याकारं वस्तु व्यवस्थापयति । स च सामान्याकारो गोत्वादिजातिः । विशेषाकारस्तु तत्तद्व्यक्तिरिति प्रत्यक्षबलादवगम्यते । तन्न कदाऽप्यपलापमर्हति । अबाधितस्य तस्य सर्वप्रमाणमूर्धन्यत्वात् । इतरप्रमाणानां तदुपजीवकत्वेन तद्बाधासामर्थ्याच्च । अतस्सिद्धा जातिः ।

सा च व्यक्तिमात्रावसायिनी सर्वगता वेति पक्षद्वयम् । तत्र प्रथमपक्षे तस्या व्यक्त्यात्मकत्वात् व्यक्तिमात्रे तदुपलम्भस्साधीयानेव । यदा तु सर्वगतत्वं, तदा व्यक्तीनामेव तदभिव्यञ्जकत्वात् व्यक्त्यात्मकत्वाच्च जातेः संयुक्ततादात्म्येनैव तस्या ग्रहणम् । तादृशस्य च सम्बन्धस्य व्यक्तिदेश एव सत्वात् न सर्वत्रोपलब्धिप्रसङ्गः । अभेदे सत्यपि जातिव्यक्त्योर्भेदस्याऽपि विद्यमानत्वात् नित्यत्वानित्यत्ववत्सर्वगतत्वमपि तस्या नाऽनुपपन्नम् । यदि जातिजातिमन्तावत्यन्तभिन्नौ तर्हि इदंगोत्वे इति प्रतीतिस्स्यात्, इमौ घटपटावितिवत् । यद्यत्यन्ताभिन्नौ तर्हि हस्तः, कर इतिवत् इदंगोपदयोः पर्यायत्वं स्यात् । तस्मादिदंगोपदयोरपर्यायत्वे सति सामानाधिकरण्यदर्शनात् भेदाभेदसमुच्चय एवाऽङ्गीकर्तव्य इति ।

सा जातिस्सामान्याकृतिपदाभ्यामप्यभिधीयते । सा च द्विधा-महासामान्यावान्तरसामान्यभेदेन । तत्र द्रव्यगुणकर्मसामान्येषु चतुर्ष्वपि महासामान्यं वर्तते सत्तापरपर्यायम् । तेषां सत् सदिति सत्तया प्रतीय-

मानत्वात् । अवान्तरसामान्यन्तु द्रव्यादिषु वर्तते द्रव्यत्वादिकम् । अनयैव दिशा शब्दत्वब्राह्मणत्वादिकमपि साधनीयं प्रत्यक्षगम्यञ्च । उक्तञ्चाऽऽचार्यैः—**न तपआदीनां समुदायो ब्राह्मण्यम् । नाऽपि तज्जनितस्संस्कारः । न तदभिव्यङ्ग्या जातिः । किन्तर्हि ? मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या च** इति ।

*इति जातिनिरूपणम्*

---

## शक्तिनिरूपणम्

अथ **शक्तिः** । साऽपि पदार्थान्तरम् । सा च लौकिकवैदिकभेदेन द्विविधा । आद्याऽग्न्यादिगता दाहकत्वादिशक्तिः । द्वितीया तु यागादीनां स्वर्गादिसाधनत्वशक्तिः । उभयमप्यर्थापत्त्या कल्प्यते । तथा हि—सत्स्वपि बीजादिष्वङ्कुरार्पणसमर्थेषु तेषां मूषिकाघ्राणेऽङ्कुरोत्पत्तिर्न दृश्यते । तदन्यथानुपपत्त्या चैवं कल्प्यते—अवश्यमस्त्यतीन्द्रियमपि बीजादेः किञ्चिद्रूपं यस्य विनाशादङ्कुरानुत्पत्तिरिति । तदेव शक्तिरित्युच्यते ।

न च घ्राणाभावस्यैव कारणत्वमस्तु । किमतिरिक्तकल्पनयेति वाच्यम् । घ्राणनक्रियायाः क्षणिकत्वेन तन्नाशोत्तरमङ्कुरोत्पत्तेर्वारयितुमशक्यत्वात् । न च घ्राणनध्वंसाभावस्याऽपि कारणत्वात् सति मूषिकाघ्राणे तदनन्तरं तद्ध्वंसोत्पत्तेः ध्वंससत्त्वेन तदभावरूपकारणाभावान्नाऽङ्कुरोत्पत्तिरिति वाच्यम् । घ्राणप्रागभावस्य कारणत्वं कल्प्यतां वा, तद्ध्वंसस्य वेत्यत्र विनिगमनाविरहात् लाघवात् शक्तिकल्पनस्यैवोचितत्वात् इति ।

एवं यागादेरपि श्रुतिबोधितस्वर्गादिरूपफलसाधनत्वान्यथानुपपत्त्या अपूर्वं नाम किञ्चित् कल्प्यते । **'ज्योतिष्टोमेन स्वर्गकामो यजेत'** इत्यादिभिर्वाक्यैः ज्योतिष्टोमादीनां कर्मणां स्वर्गादिसाधनत्वं श्रूयते । तच्च स्वर्गादिकं देशान्तरकालान्तरशरीरान्तरभोग्यमाशुतरविनाशिनो यागादेर्नोत्पत्तुमर्हति ।

अतस्तावत्कालपर्यन्तावस्थायि किञ्चित्कल्प्यते। सैव च यागादेश्शक्तिरपूर्वपदाभिधेया। सा च फलबलात् यजमानात्मनिष्ठतया कल्प्यते। यथाहुराचार्याः—

**शक्तिः कार्यानुमेयत्वात् यद्गतैवोपयुज्यते।**
**तद्गतैवाऽभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा॥ इति।**

अतश्शक्तिः पदार्थान्तरमिति सिद्धम्।

न च तस्या गुणत्वं शङ्क्यम्। गुणेऽपि सत्त्वात्। शक्तिर्गुणो न भवति, गुणवृत्तित्वात्, सत्तावत्। नाऽपि सामान्यादिकं भवितुमर्हति। तद्वृत्तित्वादेव। यद्यत्र वर्तते तत्तन्न भवति, यथा गुणवृत्ति गुणत्वं गुणो न भवति। यथोक्तम्—

**न द्रव्यगुणवृत्तित्वात् गुणकर्मबहिष्कृता।**
**सामान्यादिषु सत्त्वेन सिद्धं भावान्तरं हि सा॥ इति।**

अनेनैव हेतुना संख्याया भावान्तरत्वं साधनीयम्। सादृश्यस्य तु न पदार्थान्तरत्वं भट्टमते। किन्तु तत्तत्सामान्यस्वरूपमेव। यथाऽऽहुः—

**सामान्यमेव भूयांसि गुणावयवकर्मणाम्।**
**भिन्नप्रधानसामान्यावृत्ति सादृश्यमिष्यते॥ इति।**

इति शक्तिनिरूपणम्।

---

## अभावनिरूपणम्

नास्तीति प्रत्ययविषयोऽभावः। स चतुर्विधः—प्रागभावः, ध्वंसाभावः, अत्यन्ताभावोऽन्योन्याभावश्चेति। तत्र मृत्पिण्डादौ कारणे घटाद्युत्पत्तेः पूर्वं योऽभावस्स प्रागभावः। क्षीरे यो दध्यभावः स प्रागभावः। घटे मुद्गरप्रहारानन्तरं योऽभावः दधनि च योऽभावः पयसः स प्रध्वं-

साभावः । इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः । गवि योऽश्वाद्यभावः सोऽन्योन्याभावः ।

अयमेव पृथक्त्वमित्यपि व्यवह्रियते । न तु पृथक्त्वं नाम गुणान्तरम्, तस्य निराकृतत्वात् । यत्राऽधिकरणे यस्य कालत्रयेऽप्यभावस्सोऽत्यन्ताभावः । यथा वायौ रूपात्यन्ताभावः । शशे शृङ्गाभावश्च । एषां चतुर्णामभावानामनुपलब्धिगम्यत्वमग्रे निरूपयिष्यते ।

*प्राभाकरास्तु*—अभावाख्यं वस्त्वेव नाऽस्ति । या त्वभावप्रतीतिः सा भूतलप्रतीतेर्नाऽतिरिच्यते । अतो भूतलातिरिक्तस्य कस्यचिदभावात् न तद्ग्रहणायाऽनुपलब्ध्याख्यं प्रमाणमङ्गीकर्तव्यम्—इति वदन्ति । यथाऽऽहुः—

**न भावातिरिक्तोऽभावोऽङ्गीक्रियते । भाव एव त्वेकाकी सद्वितीयश्चेति द्वयीमवस्थामनुभवति । तत्रैकाकी भावः स्वरूपमात्रमुच्यते । भूतलादिभावानामवगतिर्द्वेधा । एका तावत् भावान्तरसंसृष्टविषया । अपरा च तदेकविषया । या च तदेकविषया बुद्धिः सैव तेषां प्रतियोगिनामभाव इत्युच्यते** इति ।

तदसङ्गतम्; सकललोकप्रसिद्धाभावप्रतीतेरपह्नोतुमशक्यत्वात् । यदि तु 'घटो नास्ती'ति प्रतीतिरेव नास्तीत्युच्यते, तर्हि तादृशाबाधितव्यवहारस्य किमपि कारणं वक्तव्यम् । दृश्ये घटे यत् भूतलमात्रज्ञानमुत्पद्यते तदस्य कारणमिति यद्युच्येत, पटवद्भूतलोपलम्भे 'घटो नास्ती'ति व्यवहारो न स्यात् । भूतलमात्रोपलम्भाभावात् । घटविविक्तभूतलोपलम्भः कारणमिति चेत्—कोऽयं घटविवेको नाम ? यदि भूतलरूपमेव तर्हि घटवत्यपि भूतले 'घटो नाऽस्ती'ति व्यवहारो दुर्निवारः । घटसंयोगाभावः कारणमिति चेत्—तर्हि अभावमङ्गीकुर्वताऽस्मत्पक्ष एव पतितमिति । [1]अन्यत्राऽप्युक्तम्—अथ तद्व्यतिरिक्तम्, तर्हि नाममात्रं भिद्यते

[1] See न्यायकुमुदचन्द्र P. 465. L. 21.

नाऽर्थः विवेकशब्देनाऽभावस्यैवाऽभिधानादिति । अतः सिद्धमभावो नाम पदार्थान्तरमिति । समवायस्तु भाट्टैर्नाऽङ्गीक्रियते ।

एवं संक्षेपतो भाट्टमते षट् पदार्था निरूपिताः प्रासङ्गिकतया । प्रकृतमनुसरामः । अतो न प्रत्यक्षं धर्माधर्मयोः प्रक्रमत इति सिद्धम् ।

इति प्रत्यक्षनिरूपणम्

**इति तन्त्रसिद्धान्तरत्नावल्यां प्रथमपरिच्छेदे प्रत्यक्ष-निरूपणं नाम तृतीयः प्रकाशः ॥**

---

## अनुमाननिरूपणम्

एवमनुमानमपि न शक्नोति धर्माधर्माववबोधयितुम् । तथा हि—स्वाभाविकनियतसम्बन्धयोः द्वयोर्व्याप्यस्य दर्शनात् असन्निकृष्टेऽर्थे यज्ज्ञानं साऽनुमितिः । यथा संयोगेन नियतसम्बन्धयोर्धूमाग्न्योर्मध्ये व्याप्यस्य धूमस्य पर्वतादौ दर्शनात्, अनक्षगोचरे वह्न्यादौ व्यापके यज्ज्ञानं साऽनुमितिः । व्याप्यं अधिकदेशकालावृत्ति । यथा धूमो वह्न्यभाववति जलादौ न वर्तते । व्यापकमधिकदेशकालवृत्ति । यथा वह्निः धूमाभाववत्ययोगोलकादौ वर्तते । यथोक्तं *वार्तिके*—

**यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।**
**स व्याप्यो व्यापकस्तस्य समो वाऽप्यधिकोऽपि वा ॥** इति ।

अनेन समव्याप्तिर्विषमव्याप्तिरिति व्याप्तिद्वयं दर्शितं भवति । यत्र साध्यहेत्वोस्समदेशकालवृत्तित्वं सा समव्याप्तिः । यत्र साध्यमधिकदेशकालवृत्ति हेतुश्च न्यूनदेशकालवृत्तिस्सा विषमव्याप्तिः ।

## व्याप्तिनिरूपणम्

का नाम व्याप्तिः ? सम्बन्धनियमो व्याप्तिः । को नाम नियमः ? दृश्यमानेषु देशकालादिषु यो लिङ्गस्य लिङ्गिना सहभावः स एव नियमः । तेन यस्य येन यथा दृष्टेषु देशकालादिषु येन केनाऽपि सम्बन्धेन साहित्यं नियतमुपलब्धं, तेन देशान्तरकालान्तरादौ तस्य तादृशस्य साहित्यनियमादेव बोधनं भवति, सैव चाऽनुमितिरिति फलितम् ।

स च साहित्यनियमः भूयोदर्शनैः व्यभिचारादर्शनसहायैरवगन्तुं शक्यते । **ननु**—समव्याप्तिस्थले व्यापकत्वस्याऽपि सत्त्वात् तेनाऽप्यनुमित्युदयात् व्यापकस्याऽप्यनुमापकत्वप्रसङ्ग इति चेत्—न; तस्य व्याप्यत्वाकारेणैवाऽनुमापकत्वस्वीकारात् । दृष्टञ्चैतत् गोत्वेन विषाणित्वानुमाने । तथाहि—अयं विषाणी गोत्वादिति गोत्वं व्याप्यमेव विषाणित्वानुमापकम्, न व्यापकं विषाणित्वं गोत्वमनुमापयति । एवं समव्याप्तिस्थलेऽपि व्याप्यत्वरूपेणैव हेतुरनुमानप्रयोजकः । न व्यापकत्वाकारेणेति न विरोधः । यथोक्तं *वार्तिककारेण*—

**तेन यत्राऽप्युभौ धर्मौ व्याप्यव्यापकसम्मतौ ।**
**तत्राऽपि व्याप्यतैव स्यादङ्गं न व्यापिता मितेः ॥** इति ।

व्याप्तिः, नियमः, अव्यभिचार इति पर्यायाः अविनाभाव इति च । नियम्यं, गमकं, लिङ्गं, साधनं, हेतुरिति पर्यायाः ।

### [ व्याप्तिद्वैविध्यम् ]

सा च व्याप्तिर्द्विविधा—अन्वयव्याप्तिः, व्यतिरेकव्याप्तिरिति । तत्र साधनसत्वे साध्यस्याऽपि सत्वमन्वयव्याप्तिः । यथा—यत्र यत्र धूमस्तत्र तत्र वह्निरित्यन्वयव्याप्तिः । साध्यस्याऽभावे साधनस्याऽप्यभावो व्यतिरेकव्याप्तिः । यथा—यत्र यत्राऽग्न्यभावस्तत्र तत्र धूमाभाव इति । व्यतिरेकव्याप्तौ अन्वयव्याप्तेर्विपरीतो व्याप्यव्यापकभावो भवति । तादृशव्याप्तिविशिष्टो हेतुस्त्रि-

विधः—अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति । यस्योभयविधा व्याप्तिरस्ति सोऽन्वयव्यतिरेकी । यथा—यत्र यत्र धूमस्तत्र तत्र वह्निः । यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इति । यस्याऽन्वयव्याप्तिरेवाऽस्ति न व्यतिरेकव्याप्तिः स केवलान्वयी हेतुः । यथा—घटोऽभिधेयः, प्रमेयत्वात्, इति । अत्र यद्यपि यत्र यत्र प्रमेयत्वं तत्र तत्राऽभिधेयत्वमित्यन्वयव्याप्तिस्संभवति तथाऽपि यत्राऽभिधेयत्वाभावस्तत्र प्रमेयत्वाभाव इति व्यतिरेकव्याप्तिर्भवितुं नाऽर्हति, सर्वस्याऽपि प्रमेयत्वादभिधेयत्वाच्च ।

यत्र तु अन्वयव्याप्तिर्नाऽस्ति केवलं व्यतिरेकव्याप्तिरेवाऽस्ति स केवलव्यतिरेकी । यथा—पृथिवी इतरभेदवती, गन्धवत्वात्, इति । अत्र यद्यद् गन्धवत् तत्तदितरभेदवदित्यन्वयदृष्टान्तो नाऽस्ति । पृथिवीमात्रस्य पक्षत्वात् । पक्षभिन्नस्यैव दृष्टान्तत्वाभ्युपगमात् । केचित्तु केवलव्यतिरेकिणं पृथङ्नाऽङ्गीकुर्वन्ति तस्याऽप्रसिद्धविशेषणत्वरूपे पक्षदोषात्मकहेत्वाभासेऽन्तर्भावं कुर्वन्तः ।

**इदमत्राऽवधेयम्**—मीमांसकमतेऽन्वयव्याप्तिव्यतिरेकव्याप्त्योर्न समुच्चित्याऽनुमितिकारणता, किन्तु पृथक् पृथगेव । अत एव तयोर्वैकल्पिकत्वम् । क्वचिदन्वयव्याप्त्यैवाऽनुमित्युदयः, क्वचित् व्यतिरेकव्याप्त्यैवेति । अत एवोक्तं *वार्तिककृता*—

**व्याप्त्या साधर्म्य उक्ते च न वैधर्म्यमपेक्षते । इति ।**
**परस्साधर्म्यदृष्टान्तात् तं च नाऽपेक्षते यदा ।**
**पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम् ॥** इति च ।

केचित्तु अवश्याभ्युगन्तव्ययाऽर्थापत्त्यैव गतार्थतां मन्वाना व्यतिरेकव्याप्तिमेव नाऽङ्गीकुर्वन्ति । इदमेव च युक्तं प्रतिभाति ।

जिज्ञासितसाध्यवान् **पक्षः** । यथा पर्वतादिः । निश्चितसाध्यवान् **सपक्षः** यथा—महानसादिः । निश्चितसाध्याभाववान् **विपक्षः** । यथा—ह्रदादिः ।

## [ अनुमानद्वैविध्यम् ]

तच्चाऽनुमानं स्वार्थपरार्थभेदेन द्विविधम् । यत्र स्वयमेव हेतुं दृष्ट्वा व्याप्त्यादिस्मरणेन साध्यमनुमिनोति, तत्स्वार्थानुमानम् । यत्र तु स्वप्रतिपन्नमर्थमनुमानेन परं बोधयितुं वाक्यमुच्चार्यते, तत्परार्थानुमानम् । तच्च वाक्यं पञ्चावयवम्—प्रतिज्ञाहेतूदाहरणोपनयनिगमनबद्धमिति *नैयायिकाः* ।

तत्र पक्षस्य साध्यविशिष्टत्वेन कथनं **प्रतिज्ञा** । यथा—पर्वतो वह्निमानिति । पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं **हेतुः** । यथा—धूमवत्वादिति । दृष्टान्ताभिधानपुरस्सरं व्याप्तिबोधकं वचनमु**दाहरणम्** । यथा—यो यो धूमवान् स स वह्निमान्, यथा महानसः इति । सिद्धव्याप्तिकस्य हेतोः पक्षनिष्ठतया कथनमु**पनयः** । यथा धूमवानयमिति । पक्षस्य हेतुसाध्यवत्तया पुनरुपसंहारो **निगमनम्** । यथा तस्मादग्निमानिति । अत्र प्रतिज्ञया निगमनं हेतुना चोपनयो गतार्थ इति त्र्यवयवमेव तद्वयं स्वीकुर्मः ।

तच्च त्रयं प्रतिज्ञाहेतूदाहरणरूपं उदाहरणोपनयनिगमनरूपं वा । तत्राऽऽद्यं यथा—पर्वतो वह्निमान् धूमवत्वात्; यो यो धूमवान् स सोऽग्निमान्, यथा महानसः इति । द्वितीयं यथा—यो यो धूमवान् स सोऽग्निमान् यथा महानसः । धूमवांश्चाऽयं पर्वतः । तथा चाऽयमिति ।

तथा च *शबरस्वामिनः*—**यत्कर्म तत्फलवद्दृष्टम्, होमोऽपि कर्म, तेनाऽपि फलवता भवितव्यम्** इति । तच्च पुनर्द्विविधम्—विशेषतो दृष्टसम्बन्धं सामान्यतोदृष्टसम्बन्धञ्चेति । तत्राऽऽद्यं धूमेन वह्न्यनुमानम् । अत्र विशेषयोरेव धूमाग्न्योस्सम्बन्धो गृहीत इति विशेषतोदृष्टसम्बन्धमिदमनुमानम् । द्वितीयं यथा—गतिपूर्वकत्वं देशान्तरप्राप्तेः देवदत्त उपलभ्य आदित्येऽपि देशान्तरप्राप्त्या गतिरनुमीयत इति ।

---

१ See. न्या. सू. १. १. ३२. P. 36.

## हेत्वाभासनिरूपणम्

असिद्धिरनैकान्तिकत्वं, बाधकत्वञ्चेति त्रयो **हेत्वाभासाः**। हेतोराभासा हेत्वाभासाः हेतुदोषा इत्यर्थः। तत्राऽसिद्धिः पञ्चधा—स्वरूपासिद्धिः, सम्बन्धासिद्धिः, व्यतिरेकासिद्धिः, आश्रयासिद्धिः, व्याप्यसिद्धिश्चेति। हेतुस्वरूपस्यैवाऽसिद्धौ **स्वरूपासिद्धिः**। यथा बुद्धो धर्माधर्मवेदी, सर्वज्ञत्वादिति। न हि सर्वज्ञत्वमस्मन्मते क्वचित् सिद्धम्। हेतोः पक्षसम्बन्धाभावे **सम्बन्धासिद्धिः**। यथा—वह्निरदाहकश्शीतत्वात् इति। न हि शैत्यस्य वह्निसम्बन्धोऽस्ति। पक्षव्यतिरेकाभावेन पक्षसम्बन्धित्वाभावे **व्यतिरेकासिद्धिः**। अनित्यं गगनं, गगनत्वात्, इति। न हि गगनस्वरूपादन्यत् गगनत्वं नाम किञ्चिदस्ति। पक्षाभावे **आश्रयासिद्धिः**। गगनारविन्दं सुरभि, कुसुमत्वादिति। पक्षैकदेशे हेतोरवृत्तित्वं **व्याप्त्यसिद्धिः**। यथा वाय्वाकाशावनित्यौ, मूर्तत्वात्, इति। अत्र पक्षौ वाय्वाकाशौ। तदेकदेशभूत आकाशे मूर्तत्वरूपो हेतुर्नाऽस्ति। इयमेव च भागासिद्धिरित्युच्यते तार्किकैः। अथवा उपाधिमत्वं व्याप्यत्वासिद्धिः। यथा अग्नीषोमीयहिंसा अधर्मः, हिंसात्वात्, बाह्यहिंसावत्, इति। अत्र निषिद्धत्वमुपाधिः। स च साध्यव्यापकत्वे सति साधनाव्यापकत्वरूप एव। यत्र यत्राऽधर्मत्वं तत्र तत्र निषिद्धत्वमिति साध्यव्यापकत्वम्। यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमिति नाऽस्ति। यागीयहिंसाया अनिषिद्धत्वात्। अतः हिंसात्वरूपो हेतुर्व्याप्त्यभावादेव सोपाधिकस्सन् क्रतुहिंसाया अधर्मत्वं साधयितुं नेष्ट इति।

साध्यसन्देहजनकत्वम**नैकान्तिकत्वम्**। तद्द्विविधम्—सव्यभिचारत्वं सप्रतिसाधनत्वञ्चेति। यथा नित्यश्शब्दः, अमूर्तत्वादिति। अत्राऽमूर्तत्वमनित्येषु कर्मादिष्वपि वर्तत इति व्यभिचारि भवति। अतस्साध्यसन्देहं जनयति। एवं वायुरप्रत्यक्षः, रूपिद्रव्यत्वादिति हेतुः, वायुः, प्रत्यक्षो, महत्वे सत्युद्भूतरूपवत्वात्, इति सप्रतिसाधनो भवति। अत्रोभयोस्समबलत्वात्साध्यसन्देहजनकत्वमिति।

एवं बाधकत्वं तृतीयो हेत्वाभासः, यो विरोध इति तार्किकैर्व्यपदिश्यते। स बाधः षड्विधः—धर्मस्वरूपबाधः, धर्मविशेषबाधः, धर्मिस्वरूपबाधः, धर्मिविशेषबाधः, उभयस्वरूपबाधः, उभयविशेषबाधः इति केचित्[१]। तन्न, अवान्तरभेदस्याऽनुपयोगात्। वार्तिके तु पदार्थनिरूपणस्वारसिकतया ते सर्वे प्रपञ्चिताः। अतो द्वयमेव युक्तम्—धर्मस्वरूपबाधनं, तद्विशेषबाधनञ्चेति। तत्राऽऽद्यस्योदाहरणम्—शब्दो नित्यः, कृतकत्वात् इति। अत्र नित्यत्वविपरीतेनाऽनित्यत्वेन व्याप्तं कृतकत्वमिति नित्यत्वं प्रति विरुद्धत्वात् तद्बाधते। द्वितीयस्योदाहरणम्—क्षित्यादिकं सकर्तृकम्, कार्यत्वात्, घटवत् इति। अत्र साध्यस्य कर्तुरशरीरित्वं विशेषः। तद्विपरीतेन शरीरित्वरूपविशेषेण व्याप्तं कार्यत्वं घटादिषु दृष्टमित्यशरीरित्वस्य बाधकं भवति। अशरीरित्वबाधे कर्तृमत्ताऽपि बाध्यते। अतोऽयं हेतुर्विशेषविरुद्ध इत्युच्यते।

एतेन पूर्वोक्तानुमानेनेश्वरं साधयन्तो नैयायिका निरस्ता वेदितव्याः। आगमैकसाध्यत्वं तु तस्योत्तरत्र निरूपयिष्यते।

एवं हेत्वाभासस्य त्रैविध्यमेवाऽङ्गीकृतं *पार्थसारथिमिश्रैः* *मानमेयोदयकारैस्तु* असिद्धिविरुद्धत्वानैकान्तिकत्वासाधारण्यभेदेन तच्चातुर्विध्यमङ्गीकृतम्। *पार्थसारथिमिश्रा* असाधारण्यस्य संशयाजनकत्वमुपपादयन्तस्तस्य हेत्वाभासत्वं निराकुर्वन्ति। *तार्किकास्तु*[३]—अनैकान्तविरुद्धासिद्धसत्प्रतिप-

---

१. See शास्त्रदीपिका १. १. ५. P. 66. L. 7. N. S. edn.

२. See श्लोक वा. P. 378. chow. edn. नित्यत्वे कृतकत्वस्य धर्मबाधाद्विरुद्धता etc : Also न्यायरत्नाकर in the same page धर्मस्वरूपबाधमुदाहरति—नित्यत्व इति।

३. See कारिकावली of विश्वनाथन्यायपञ्चानन. श्लो. 7.

अनैकान्तो विरुद्धश्चाऽप्यसिद्धः प्रतिपक्षितः। कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा।

क्षबाधितान् पञ्च हेत्वाभासान् स्वीकुर्वते। तन्न युक्तम्। सत्प्रतिपक्षस्याऽऽस्माकीनानैकान्तिकभेदे सप्रतिसाधने, बाधितविशेषणाख्ये पक्षाभासे च बाधितस्याऽन्तर्भावस्य वक्तुं शक्यत्वात्। अतस्त्रय एव हेत्वाभासा मीमांसकमते। अत्र चाऽनुमाने पक्षाभासदृष्टान्ताभासादयश्च ये परश्शता दोषा वार्तिकोक्तास्ते तत एवाऽवगन्तव्याः। विस्तरभयान्नेह प्रपञ्चिताः॥

इत्यनुमाननिरूपणम्

**इति तन्त्रसिद्धान्तरत्नावल्यां प्रथमपरिच्छेदेऽनुमाननिरूपणं नाम चतुर्थः प्रकाशः॥**

---

## शाब्दनिरूपणम्

अथ शाब्दं प्रमाणं निरूप्यते। यद्यपि अनुमाननिरूपणानन्तरं तार्किकैरुपमानमेव निरूपितम्, तथाऽपि मीमांसकानामुपमानापेक्षया शब्दप्रामाण्यस्य मुख्यत्वाश्रयणीयत्वादनुमानसन्निकृष्टत्वाच्च तदनन्तरं मीमांसकसरणिसमायातं शब्दनिरूपणमेव क्रियते। तत्र पदश्रवणानन्तरं गृहीतपदपदार्थसङ्गतिकस्य पुंसः पदार्थस्मृतौ जातायां तैरेव पदार्थैः स्मृतैरज्ञाताबाधितार्थविषयकं यद्विशिष्टवाक्यार्थज्ञानमुत्पद्यते सा शाब्दी प्रमेत्युच्यते। तज्जनकश्शब्दः प्रमाणम्।

अत्र पदज्ञानं करणम्, पदार्थस्मृतिरवान्तरव्यापारः, शाब्दबोधः फलम्। पदार्थानां परस्परसम्बन्धरूपो यो वाक्यार्थः स संसर्गमर्यादयैव भासते। एवञ्च शाब्दबोधं प्रति ज्ञायमानपदानां पदज्ञानस्य वा करणत्वमिति *नैयायिकाः*। तन्न; पदानां स्वार्थसमर्पणमात्रेण क्षीणशक्तिकत्वात्। अतश्च पदानि यद्यपि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, तथाऽपि स्मर्य-

---

१. See कारिकावली of विश्वनाथन्यायपञ्चानन श्लो. 8। पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः। शाब्दबोधः फलं तस्य शक्तिधीस्सह कारिणी।

माणा गवादिपदार्था यद्यन्योन्यान्वयं विना सामान्यरूपेणैवाऽवतिष्ठेरन्, तर्हि पदानां व्युत्पत्तिकालेऽवगतं विशिष्टार्थतात्पर्यं विरुद्ध्येतेति सामान्यरूपस्य वाच्यत्वानुपपत्तेरन्योन्यान्वयरूपे विशेष एव पर्यवस्यन्ति पदार्थाः। स एव च वाक्यार्थः, स च लक्षणयेति पदार्थानामेव स्मृतानां लक्षणया वाक्यर्थबोधकत्वं न पदानाम्। उक्तं हि *भाष्यकारेण* वाक्याधिकरणे— **"पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अवगताःसन्तो वाक्यार्थं गमयन्ति"** इतिः। *श्लोकवार्तिकेऽपि—*

**अत्राभिधीयते यद्यप्यस्तिमूलान्तरं न नः।**
**पदार्थानान्तु मूलत्वं युक्तं तद्भावभावतः॥** इति।

**तद्भावभावतः** पदार्थेषु सत्सु वाक्यार्थोदयादित्यर्थः। अतस्सिद्धं पदैरभिहिताः पदार्था लक्षणया वाक्यार्थमवबोधयन्तीति। तत्र गामानयेत्यत्र, आनयतिरानयनसामान्यमभिधाय तद्व्यक्तिविशेषं लक्षयति। गोपदमपि स्वार्थद्वारेणाऽऽनयनमेव गोकर्मकत्वाकारेण, तत्सम्बद्धस्वरूपेण लक्षणया प्रतिपादयतीति परस्परान्वयलाभाद्गवानयनरूपवाक्यार्थसिद्धिः, सोऽयमभिहितान्वयवादो भट्टसम्मतः।

*प्राभाकरास्तु*—अन्विताभिधानमिच्छन्ति। तद्यथा—गामानयेत्यादिप्रथमश्रवणे गवानयनरूपस्याऽन्वितार्थस्य शब्द एवाऽवगमको ज्ञातः। अतस्तदनुरोधेन सकृदवबोधितार्थानामपि पदानामेव पुनरप्यन्वितार्थबोधकत्वं वक्तव्यम्, न तु पदार्थानाम्। आवापोद्वापाभ्यां हि पदार्थेषु विविच्यमानेषु तत्र तत्र तैरन्विता एव ते दृष्टा न त्वेकाकिन इति अन्विते स्वार्थे पदानां शक्तिर्न परित्यज्यते। अतः पदाभिधेय एवाऽन्वितरूपवाक्यार्थो, न तु पदार्थगम्य इति। तदिदमसारम्—'पदानां पदार्थे वाक्यार्थे चेत्यनेकशक्तिकल्पनाप्रसङ्गात्। एकस्मिन् वाक्ये सर्वैरपि पदैः प्रत्येक-

मितरान्वितस्वार्थे बोध्यमाने पदे पदे वाक्यार्थप्रत्ययोऽपि दुर्वारस्स्यात् । अतो नाऽन्विताभिधानं युक्तमित्यन्यत्र विस्तरः ।

## आकाङ्क्षादिनिरूपणम्

तादृशपदार्थैश्च वाक्यार्थे जननीये आकाङ्क्षासत्तियोग्यतास्सहकारिण्यः । तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्व**माकाङ्क्षा** । क्रियाश्रवणे कारकस्य, कारकश्रवणे क्रियायाः, करणश्रवणे इतिकर्त्तव्यतायाश्च जिज्ञासाविषयत्वात् । 'गामानय' 'समिधो यजति' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिषु लौकिकवैदिकेषु वाक्येषु तत्सत्वाल्लक्षणसमन्वयः । गौः, अश्वः, हस्ती, पुरुष इत्यादौ नाऽतिव्याप्तिः ।

अव्यवधानेन पदजन्यपदार्थोपस्थिति**रासत्तिः** । अश्रुतपदार्थस्थले 'द्वार' मित्यादौ 'पिधेही'ति पदाध्याहारपूर्विकैव पदार्थोपस्थितिः । यथोक्तम्—

**शाब्दस्यैवाऽन्वयार्हत्वाद् द्वारमाव्रियतामिति ।**
**शब्दाध्याहार एव स्यादित्येवं मादृशां मतम् ॥ इति ।**

*प्राभाकरा*[1]*स्तु*—अर्थस्य पिधानरूपस्यैवाऽध्याहारमिच्छन्ति । तन्न युक्तम्, तथात्वे पिधानांशे शाब्दत्वं न स्यात्, पदजन्यपदार्थोपस्थितेरेव शाब्दबोधजनकत्वनियमात् ।

तात्पर्यविषयसंसर्गाबाधो **योग्यता** । 'वह्निना सिञ्चे'दित्यादौ तादृशसंसर्गाभावान्नाऽतिव्याप्तिः । *नवीना*[2]*स्तु*—न योग्यताज्ञानस्य कारणत्वम् । किन्तु अयोग्यतानिश्चयस्य प्रतिबन्धकत्वमात्रम्, तदभावश्च कारणं स्वरूपसन्नेवेति वदन्ति ।

---

१. See प्रकरणपञ्चिका P. 8. वा. मा.

२. भाट्टदीपिका ३. १. ६. P. 356 L.5. L. J. P. edn. न योग्यताज्ञानं शाब्दबोधे हेतुः etc. Also. भाट्टचिन्तामणि from the same page.

५

पदानां स्वार्थबोधकता **वृत्तिः**। सा च त्रिधा—अभिधा, लक्षणा, गौणी चेति। तत्र **अभिधा** नाम—पदानां स्वार्थे मुख्या वृत्तिः। सैव शक्तिरित्युच्यते। यथा घटपदस्य कम्बुग्रीवादिमदर्थानुगतघटत्वबोधकत्वम्। घटादिपदानां हि घटत्वादिजातिरेवाऽभिधेया, न व्यक्तिः। तासामानन्त्यात् एकस्यां व्यक्तौ शक्तिग्रहणे व्यक्त्यन्तरस्य बोधानापत्तेः। तत्राऽपि शक्तिस्वीकारेऽनन्तत्वात्तासामनन्तशक्तिकल्पनाप्रसङ्गात्। न च जातेरुपलक्षकत्वम्, तथात्वे 'नागृहीतविशेषणा' न्यायेन प्रथमोपस्थितायां जातावेव लाघवाच्छक्तिकल्पनौचित्यात्। अतः पदानां जातावेव शक्तिः। व्यक्तिबोधस्तु लक्षणाक्षेपादिनेति दिक्।

शक्यसम्बन्धो **लक्षणा**। यथा—'नीलं घटमानय' इत्यत्र नीलशब्दस्य नीलगुणवाचकस्य तद्विशिष्टे लक्षणा। 'गङ्गायां घोष' इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धिनि तीरे गङ्गापदस्य लक्षणा।

शक्यार्थनिष्ठगुणसजातीयगुणयोगो **गौणी**। यथा 'सिंहो माणवक' इत्यत्र सिंहनिष्ठप्रसह्यकारित्वसदृशप्रसह्यकारित्वरूपगुणयोगात् सिंहशब्दो माणवके गौणः। न च लक्षणातो गौण्या न भेदः, शक्यसम्बन्धमात्रस्य लक्षणात्वात्। शक्यनिष्ठगुणसजातीयगुणवत्त्वस्य गौणीत्वात्। उक्तं हि वार्तिककृता—

**अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते।**
**लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥** इति।

एवञ्च माणवकनिष्ठप्रसह्यकारित्वादेरेव यदा शक्यसम्बन्धित्वेन रूपेण सामान्याकारेण बोधस्तदा लक्षणा। यदा तु तन्निष्ठगुणसजातीयगुणवत्त्वेन रूपेण बोधस्तदा गौणीति ध्येयम्। लक्षितलक्षणा तु लक्षणायामेवाऽन्तर्भवतीति न सा पृथक्व्यपदेशमर्हति। अत एव 'यजमानः प्रस्तर' इत्यादौ यजमाननिष्ठस्रुग्धारणादिरूपकार्यसजातीयकार्यकारित्व-

रूपगुणस्तत्सिद्धिरूपः अन्यानि च जात्यादीनि गौणीवृत्तिनिमित्तानि पूर्वमेव नामधेयप्रस्तावे निरूपितानि ।

तच्च पदं त्रिविधं रूढं, यौगिकं, योगरूढञ्चेति । यत्समुदायशक्त्याऽर्थप्रत्यायकं तद्रूढम् । अवयवशक्त्याऽर्थप्रत्यायकं **यौगिकम्** । अवयवशक्त्युपोद्बलितसमुदायशक्त्याऽर्थप्रतीतिजनकं **योगरूढम्** । तत्र घटः, चित्रगुः, पङ्कजं, इति क्रमेणोदाहरणानि । केचित्तु *नवीनाः* पङ्कजादिपदानां योगेनैव निर्वाहं कुर्वन्तः मण्डूकादिषु प्रयोगापत्तिं प्राचीनप्रयोगाभावेनैव वारयन्तः योगरूढिं पृथङ्नाऽङ्गीकुर्वन्ति ।

लक्षणागौण्योर्बीजमन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्च । 'यजमानः प्रस्तर' इत्यादौ अन्वयानुपपत्तिः । अर्थवादानां प्राशस्त्यलक्षकत्वे स्वाध्यायविधितात्पर्यानुपपत्तिरिति पूर्वमेवोक्तम् । **तात्पर्यञ्च** विशिष्टार्थबोधोद्देश्यकाम्नानम् । अतो वेदे कर्तुरभावेनेच्छाया अभावेऽपि न क्षतिः । तच्च तात्पर्यं वेदे मीमांसापरिशोधितन्यायात् षड्विधैर्लिङ्गैश्चाऽवगम्यते । लोके च प्रकरणादिना । तच्च शाब्दं द्विविधम्—पौरुषेयमपौरुषेयञ्चेति । तत्र पौरुषेयमाप्तवाक्यम्। अपौरुषेयो वैदिकश्शब्दराशिः । सोऽकृतको नित्य इति वक्ष्यते । *नैयायिकास्तु* तस्येश्वरप्रणीतत्वमभ्युपगच्छन्त उभयोरपि लौकिकवैदिकयोराप्तोच्चरितत्वेनैवाऽनुगमं कुर्वन्ति । तन्नाऽस्माकमभिमतमित्यग्रे वक्ष्यामः । उभयोरपि चाऽनाप्तप्रणीतत्वाच्छब्दस्य च स्वतोऽदुष्टत्वादुभयमपि प्रमाणमेव ।

---

१. See मीमांसाकौस्तुभ १. ४. २. P. 169. L. 7 Vol I Chow. edn. उद्भिच्छब्दस्य ज्योतिष्टोमादौ याज्ञिकानां प्रयोगाभावेनेत्यादि ।

२. See वैशेषिकसू. 6. 1.1. P.144 L. 7. Chow edn. बुद्धिपूर्वा वाक्यकृतिर्वेदे ।

३. See कारिकावली 79.श्लो. Also न्यायमंजरी P. 213 आप्तोपदेशश्शब्दः P. 137. Chow. edn.

तत् पुनरपि द्विविधम्—सिद्धार्थबोधकं विधायकञ्चेति । 'एष राजा पाञ्चाल' इति लोके सिद्धार्थबोधकम् । वेदे च 'वज्रहस्तः पुरन्दर' इत्यादि । विधायकमपि द्विविधम्—औपदेशिकमातिदेशिकञ्चेति । 'इत्थमिदं कर्तव्य' मित्यौपदेशिकम् । 'तद्वदिदं कर्तव्य' मित्यातिदेशिकम् । प्रथमस्योदाहरणं लोके 'देवदत्तो घृतसूपशाकादिभिर्भोजयितव्य' इति । वेदे च 'अवघातप्रोक्षणाघाराज्यभागादिभिरङ्गैरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं सम्पादये'दिति । द्वितीयस्योदाहरणं लोके 'देवदत्तवद्यज्ञदत्तो भोजयितव्य' इति । वेदे च 'सौर्ययागेन ब्रह्मवर्चसं सम्पादयेदाग्नेयवदुपकृत्ये'ति । उपदेशस्यैव विस्तरो द्वितीयादिष्षष्ठान्तोऽध्यायसमुदायः । अतिदेशस्य विस्तरस्सप्तमादिर्दशमान्तः । एकादशद्वादशावुभयसाधारणाविति विवेकः ॥

*इति शाब्दनिरूपणम्*

**इति तन्त्रसिद्धान्तरत्नावल्यां प्रथमपरिच्छेदे शाब्दनिरूपणं नाम पञ्चमः प्रकाशः ॥**



## उपमाननिरूपणम्

अथोप**मानं** निरूप्यते । उपमानं पूर्वदृष्टेऽर्थे स्मर्यमाणे यद्दृश्यमानार्थसादृश्यज्ञानं **सोपमितिः** । दृश्यमानगवयनिरूपितसादृश्यप्रकारकगोविशेष्यकप्रमोपमितिरिति फलितम् । तत्करणं गवयपिण्डदर्शन**मुपमानम्** । नागरिको हि पुरुषः नगरे दृष्टगुः कदाचिदरण्यं गतस्तत्र गवयं पश्यति । तदा तद्गतसादृश्यं प्रत्यक्षेणाऽवगच्छति । अनन्तरं च समानसंवित्संवेद्यतया गवयसादृश्यं गोनिष्ठं स्मरति एतद्गवयसदृशी मदीया गौरिति । सैव चोपमितिरित्युच्यते । तत्करणं च गवयपिण्डदर्शनमुपमानमिति । *तार्कि*कास्तु 'गोसदृशो गवय' इत्यारण्यकपुरुषवाक्यं श्रुत्वा कदाचिदरण्यं गतो

नागरिकस्तत्र गवयं पश्यन् तस्मिन् गोसादृश्यमवगच्छति। अनन्तरमारण्यकवाक्यार्थं स्मरति। ततश्च 'गवयो गवयपदवाच्य' इति ज्ञानं तस्य जायते। तत्र गवयो गवयपदवाच्य इत्युपमितिः। आरण्यकवाक्यार्थस्मरणमवान्तरव्यापारः। गवयगतगोसादृश्यज्ञानमुपमानमिति वदन्ति। केचित्तु गोसदृशो गवय इति वाक्यस्यैवोपमानत्वमिच्छन्ति। अस्योपमितिज्ञानस्य शब्दजन्यत्वेन शाब्दानतिरेकात् पृथक् प्रमाणत्वं न सिध्यतीति मीमांसका उपमानमिदमन्यथा वर्णयन्ति स्म। तत्स्वरूपन्तु वर्णितमेव। प्रयोजनं तु—अवगतसाङ्गदर्शपूर्णमासादिरूपप्रकृतिपदार्थस्य विकृतिदर्शनेन तत्सदृशस्य प्रकृतियागस्य स्मरणम्—सौर्ययागसदृश एकदेवत्यत्वौषधद्रव्यकत्वादिनाऽऽग्नेय इति। तेन चाऽतिदेशवाक्यकल्पनम्—सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवत्—इति। उक्तं हि *वार्तिककृता*—

**भिन्नाऽनुमानादुपमेयतोक्ता सौर्यादिवाक्यैरसहाऽपि दृष्टम्।**
**सादृश्यतोऽग्न्यादियुतं कथं नु प्रत्याययेदित्युपयुज्यते नः॥ इति।**

*इत्युपमाननिरूपणम्*

## अर्थापत्तिनिरूपणम्

अथाऽर्थापत्तिर्निरूप्यते। प्रमितस्याऽर्थस्याऽर्थान्तरेण विनाऽनुपपत्तिमालोच्य तदुपपत्त्यर्थमर्थस्य कल्पनं यत् **सार्थापत्तिः**। यथा प्रमाणान्तरेण देवदत्तस्य जीवने निश्चिते सति गृहेऽनवस्थितस्य तस्य जीवतो बहिर्भावकल्पनं विना जीवनमनुपपन्नं भवतीति जीवनं बहिर्भावं कल्पयति साऽर्थापत्तिः। अत्रोपपाद्यं जीवनं करणम्। उपपादको बहिर्भावः फलम्। येन विना यदनुपपन्नं तदुपपाद्यं जीवनम्। यस्याऽभावे यस्याऽनुपपत्तिः स उपपादको बहिर्भावः। अत्र च प्रमाणावगतो जीवनबहिर्भावयोः परस्परं प्रतिघातः करणम्। गृहे वाऽवस्थितो देवदत्तो बहिर्वेति केनचित् प्रमाणेनाऽवगतम्। अन्येन च गृहे नाऽस्तीति। तदुभयं समु-

ञ्चितं परस्परप्रतिघाति प्रतीयते । सोऽयं प्रतिघातो बहिर्भावकल्पनया समाधीयते। तेन प्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परं प्रतिघातोऽर्थान्तरकल्पनया समाधेयत्वेनाऽऽलोच्यमानोऽर्थापत्तेः कारणम् । तत्समाधानाय चार्थान्तरकल्पनाऽर्थापत्तिरिति सिद्धम् । अस्या अर्थापत्तेरनुमान एवान्तर्भावमिच्छन्ति *नैयायिकाः*। तदनुपपन्नम्; अर्थापत्तावनुपपद्यमानस्य गम्यत्वमुपपादकस्य गमकत्वम्। अनुमितावुपपादकस्यैव गम्यत्वमनुपपन्नस्य च गमकत्वमिति तयोरत्यन्तभेदात्। किञ्च नाऽर्थापत्तिरनुमानेऽन्तर्भवति। तत्राऽन्वयव्याप्त्यग्रहणेनाऽन्वयिन्यनन्तर्भावात् । नाऽपि व्यतिरेकिणि, तस्य पूर्वमेव निरस्तत्वात्। सा चाऽर्थापत्तिर्द्विविधा—दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। तत्र दृष्टार्थापत्तेरुदाहरणमुक्तम्। श्रुतार्थापत्तेरुदाहरणं लोके 'द्वार' मित्युक्तौ तस्य सम्पूर्णतासिद्धये 'संव्रियता' मित्यादि शब्दान्तरं श्रुतशब्दैकदेशत्वेन कल्प्यते । वेदेऽपि 'विश्वजिता यजेत' इत्यादौ 'स्वर्गकाम' इति श्रुतैकदेशवाक्यत्वेन कल्प्यमिति सिद्धाऽर्थापत्तिः॥

*इत्यर्थापत्तिनिरूपणम्*

---

## अनुपलब्धिनिरूपणम्

अथेदानीमनुपलब्धिं निरूपयामः। अनुपलब्धिर्नामोपलब्ध्यभावः। स च प्रत्यक्षादिप्रमाणपञ्चकप्रवृत्तिप्रतियोगिकः। एवञ्च प्रवृत्तियोग्यानां पञ्चानामपि प्रत्यक्षादीनां प्रमाणानां यत्राऽप्रवृत्तिः, सा योग्यानुपलब्धिर्नामाऽभावरूपं षष्ठं प्रमाणं घटाद्यभावविषयकमिति सिध्यति। उक्तं हि *वार्तिककृता*—

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।**
**वस्तुसत्तावबोधार्थं तत्राऽभावप्रमाणता ॥** इति ।

---

१. See न्यायमञ्जरी P.41. L. 7 अभावपूर्विकाऽर्थापत्तिरनुमानमेव etc.

युक्तं चैतत् । न हि स इन्द्रियेण गृह्यते । इन्द्रियव्यापाराभावेऽपि तदुदयात् । यो हि प्रातःकाले गृहेऽवस्थितो मध्याह्ने पृच्छ्यते—किमस्मिन् गृहे प्रातः कश्चित् श्यामो लोहिताक्षो दृष्ट इति, स तदानीमेव योग्यस्मरणानुदयात् तस्याऽभावं प्रातःकालिकमिन्द्रियव्यापारं विनैवाऽवधारयति । अतो नेन्द्रियकरणकं तज्ज्ञानम्, नाऽप्यनुमेयम्, लिङ्गलिङ्गिनोस्सम्बन्धग्रहादेरभावात् । नाऽपि चोपमानादेः प्रवृत्तिः । तद्धेतोस्सादृश्यज्ञानादेरभावात् । अतोऽवश्यं प्रमाणान्तरभूतयाऽनुपलब्ध्यैवाऽभावस्तादृशः प्रत्येतव्य इति सिद्धमभावस्य षष्ठप्रमाणत्वमभावविषयकत्वं चेति ।

*प्राभाकरास्तु*[1]—अभावाख्यं पदार्थमेवाऽपलपन्तस्तद्ग्राहकत्वेन षष्ठं प्रमाणं प्रमाणाभावरूपं नाऽङ्गीकुर्वन्ति । तदस्माभिरभावपदार्थस्य पूर्वं साधितत्वात् तस्य च प्रत्यक्षादिभिर्ग्रहीतुमशक्यत्वात् परिशेषादनुपलब्धिगोचरत्वमेवेत्युपेक्षणीयम् । अतस्सिद्धमनुपलब्धिर्नाम षष्ठं प्रमाणम् ॥

*इत्यनुपलब्धिनिरूपणम्*

यत्तु सम्भवाख्यं शते पञ्चाशदादिसंख्यास्तित्वरूपं, यच्चैतिह्याख्यं 'इह वटे यक्षस्तिष्ठति' इति, तत्र प्रथमस्याऽनुमानेऽन्तर्भावः । द्वितीयस्य प्रामाण्यमेव न सम्भवति, अनिर्णायकत्वात् । सत्यपि वा प्रामाण्ये तस्य शब्द एवाऽन्तर्भाव इति न तयोः पृथक् परिगणनावसरः । अतस्सिद्धं षडेव प्रमाणानि भाट्टमते न न्यूनानि नाऽधिकानि । तेषु वेदतदुपजीविप्रमाणं विहाय कस्याऽपि धर्मे प्रवृत्तिर्नाऽस्तीति ॥

*इति तन्त्रसिद्धान्तरत्नावल्यामुपमानादिनिरूपणं नाम षष्ठः प्रकाशः ॥*

**इति महामहोपाध्यायपण्डितसार्वभौमवेङ्कटसुब्रह्मण्यापरनामकश्रीचिन्नस्वामिशास्त्रिविरचितायां तन्त्रसिद्धान्तरत्नावल्यां प्रथमः परिच्छेदः ॥**

---

१. See प्रकरणपञ्चिका P. 118. L. 7

# अथ द्वितीयः परिच्छेदः

## अर्थभावनानिरूपणम्

स च धर्मो यागहोमदानादिरूपो यजेत, जुहुयात्, दद्यात्, इत्यादिभिरवबोध्यते। तत्र प्रत्ययस्य द्वैरूप्यमस्ति लिङ्त्वमाख्यातत्वञ्चेति। लिङ्त्वेन रूपेण शाब्दी भावना आख्यातत्वेन च रूपेणाऽऽर्थी भावनाऽभिधीयते। तत्र च धात्वर्थः करणम्। स्वर्गादिः फलम्। तथा च 'स्वर्गकामो यजेत' इत्यादेरयमर्थः—स्वर्गफलिका यागकरणिका यत्किञ्चिदितिकर्तव्यताका शब्दभावनाविषयिणी आर्थी भावनेति। इदं चाऽऽर्थीभावनाया मुख्यविशेष्यत्वम्, इतरेषां कारकादीनां शाब्दीभावनायाश्च तत्रैव विशेषणतयाऽन्वयो नवीनमते। प्राचीनमते तु शब्दभावनया एव मुख्यविशेष्यत्वमिति बोध्यम्।

**ननु** केयमार्थी भावना? यस्यां धात्वर्थः करणमिष्यते। तस्यास्सत्वे धात्वर्थातिरिक्तत्वे वा किं मानमिति चेत्; उच्यते—पुरुषगतः फलानुकूलो व्यापार आर्थी भावना। शाब्दी भावना तु पूर्वं निरूपिता। उभयानुगतं लक्षणं तु भवितुर्भवनानुकूलः प्रयोजकव्यापारविशेष इति। अन्योत्पत्यकूलप्रयोजकव्यापारत्वमेव लक्षणम्। भवितुरित्यादि स्वरूपकथनमिति द्रष्टव्यम्। सा चाऽऽख्यातेनोच्यते। तथाहि—पचतीत्यत्र विक्लृत्तिस्तदनुकूलोऽधिश्रयणादिरवस्नावणान्तो व्यापारः तदनुकूलः प्रयत्नश्च भासत इत्यविवादम्। तेषां च भानकारणजिज्ञासायां पचतीत्यतस्तेषां प्रतीतेः 'यच्च यस्मात्प्रतीयते तत्तस्य वाच्य'मिति न्यायेन तदेव पदं तेषां वाचकमित्यङ्गीकर्तव्यम्। तत्राऽपि कोऽशः कस्य वाचक इति जिज्ञासायां प्रकृत्यंशस्य विक्लृत्तितदनुकूलव्यापारवाचित्वम्, प्रत्ययांशस्य यत्नवाचित्वमित्यास्थीयते। फलव्यापारयोर्धातुरिति वचनात्। फलमात्रस्य धात्वर्थत्वे व्यापारापगमदशायां पाको विद्यत इति प्रयोगापत्तिः। ग्रामो गमनवानिति प्रयोगापत्तिश्च।

व्यापारमात्रस्य तत्त्वे त्यजिगम्योर्धात्वोः पर्यायत्वापत्तिः। अतः फलावच्छिन्नो व्यापारो धात्वर्थः। एवञ्च फलावच्छिन्नव्यापारमात्रांशे धातोः पर्यवसानात् तदतिरिक्ततया भासमानो यत्नादिराख्यातार्थ एवेत्यङ्गीकार्यम्।

न च तस्याऽपि व्यापारत्वाविशेषात् व्यापारत्वेन रूपेण सर्वेषामेव व्यापाराणां धातुना सङ्ग्रहः कुतो न स्यादिति वाच्यम्। पचति पाकं करोति पाकं भावयतीति धात्वर्थात्पाकात्तस्य पृथक् विवरणदर्शनात् तस्याऽपलपितुमशक्यत्वात् करोतिविक्रियमाणस्याऽर्थस्याऽऽख्यातार्थत्वाङ्गीकारात्। एवञ्च फलं तज्जनकीभूताधिश्रयणफूत्कारादिश्शारीरो व्यापारश्च धातुवाच्यः। तदनुकूलव्यापारसमूहस्सर्वोऽपि तिङर्थः।

यत्त्वत्र[1] कुतूहलवृत्तौ फलमात्रस्य धात्वर्थत्वमङ्गीकृत्य तदितरस्य सर्वस्याऽपि व्यापारस्याऽधिश्रयणफूत्कारादेराख्यातवाच्यत्वमुक्तम्, तन्नाऽऽदर्त्तव्यम्। फलमात्रधात्वर्थपक्षस्य बहुधा ग्रन्थान्तरेषु खण्डितत्वात्। स प्रयत्न एवाऽऽर्थीभावनेत्युच्यते। अर्थ्यते पुरुषैरिति अर्थः फलम्। तत्सम्बद्धाऽऽर्थी भावना। तल्लक्षणञ्च फलोत्पत्त्यनुकूलः पुरुषगतो व्यापारविशेष इत्युक्तम्।

आर्थी भावना हि यागदानादिरूपधात्वर्थनिष्पादनद्वारा स्वर्गपश्वादिकं फलं जनयति। अतस्तत्र प्रयोजकव्यापारत्वं घटत एव। अतश्च धात्वर्थानुकूलव्यापारसमूह एवाऽऽख्यातार्थः, आर्थी भावना च लोके। न च कृञा विवरणदर्शनात् करोतेर्यत्नार्थकत्वेनाऽऽख्यातस्याऽपि यत्नार्थकत्वमिति वाच्यम्। करोतेर्भावयतिपर्यायत्वेन यत्नार्थकत्वाभावात्। अत एव रथो गच्छतीत्यादौ रथो गमनं करोतीत्यचेतनेऽपि विवरणं सङ्गच्छते। किञ्च करोतेर्यत्नार्थकत्वे यततेरिव तस्याऽप्यकर्मकत्वापत्तिः। अतः करोतेर्न यत्नार्थ-

---

१. See कुतूहलवृत्ति P. 125. L. 3. तण्डुलरूपकर्मगता विक्लृत्तिः पचिवाच्या। तत्प्रयोजको देवदत्तादिकर्तृव्यापारोऽधिश्रयणादिनिचयरूप आख्यातप्रत्ययवाच्यः।

कत्वम्, किन्तु भावयतिपर्यायत्वादनुकूलव्यापारवाचित्वमेव । यत्त क्वचित् पचति पाके यतते इति विवरणं दृश्यते तल्लाक्षणिकम् । एवञ्च विक्लित्तिरूपफलोद्देश्यकपाकानुकूलव्यापारसमूह एव तिङर्थः । स च सामान्यरूपेणाऽऽख्यातात्बोधितोऽपि तत्तद्विशेषरूपेण तैस्तैर्विशेषवाक्यैरवबोध्यते ।

एवं "यजेत स्वर्गकाम" इत्यादौ देवतोद्देश्यकद्रव्यत्यागरूपयागादिर्धातुनाऽभिधीयते । तदुपकारकश्च प्रयाजानूयाजादिरङ्गकलापरूपस्सर्वोऽपि व्यापारस्सामान्यरूपेणाऽनुकूलव्यापारत्वरूपेणाऽऽख्यातेनाऽभिधीयते । विशेषरूपेण तु तत्तदङ्गविधिभिः प्रयाजादिवाक्यैः । अतस्तत्तदङ्गविधिभिर्विधीयमानः अन्वाधानादिब्राह्मणतर्पणान्तस्सर्वोऽपि व्यापार आख्यातार्थस्यैव प्रपञ्चरूप इति *पार्थसारथिः*[1] ।

*नवीनास्तु*[2]—न व्यापारसामान्यमाख्यातार्थः । तत्तज्जन्यभेदेन तत्तदुत्पादकभेदेन च व्यापारत्वभेदावश्यंभावादेकशक्यतावच्छेदकत्वानुपपत्तेः विशेषविषयकतत्तच्छक्तिकल्पने चाऽनेकशक्तिकल्पनागौरवात् पचति पाकं करोति इति विवरणबलात् लाघवात् यत्नत्वं शक्यतावच्छेदकीकृत्य यत्न एवाऽऽख्यातार्थः । लघुभूतैकशक्यतावच्छेदकसम्भवेऽनेककल्पनस्याऽन्याय्यत्वात् । यत्नत्वस्य जातिरूपत्वेन लघुत्वात् । न च कृञो न यत्नार्थकत्वम् । प्रयत्नाभावे वातरोगादिना स्पन्दमाने चैत्रे 'नायं स्पन्दं करोति वातरोगादिनाऽस्य शरीरं स्पन्दते, इति सत्यपि व्यापारे कृञर्थनिषेधदर्शनात् करोतिनेव यतिधातुनाऽपि विवरणदर्शनाच्च कृञो यत्नार्थकत्वावगमात् ।

न च कृञो यत्नार्थकत्वे तत्पर्यायत्वापत्त्या यततेरिव कृञोऽप्यकर्मकत्वापत्तिरिति युक्तम् । सकर्मकत्वाकर्मकत्वे ह्याकाङ्क्षाधीने । आका-

---

१. See शास्त्रदीपिका P. 102 L. 15. and so on.

२. See मीमांसाकौस्तुभ P. 21. L. 2. vol II Chow. edn.

ङ्क्षायाश्शब्दस्वभावाधीनतया अपर्यनुयोज्यत्वात्। यथैव हि घटः, कर्मत्वं, आनयनं, इत्यत्र नाऽऽकाङ्क्षा, किन्तु घटमानयतीत्यत्रैव पर्यायत्वेऽपि सा, तथैव पर्यायत्वेऽपि कृञ एव कर्माकाङ्क्षा, न यततेः। अत एव *भाष्यकारो*ऽपि भावार्थाधिकरणे—तथा यतेत यथा किञ्चित् भवति इति, इन्द्रियकामाधिकरणे च—कतमोऽत्र शब्दः पुरुषप्रयत्नस्य वक्तेति, जुहुयादिति ब्रूमः इति, जुहुयादिति शब्दस्यैतत्सामर्थ्यं यद्धोमविशिष्टं प्रयत्नमाह इत्यादिना चाऽऽख्यातस्य यत्नार्थकत्वमेव स्पष्टीकरोतीति सिद्धं कृञो यत्नवाचित्वात् तेन यतिना च विवरणादाख्यातस्य यत्नवाचित्वम्। सिद्धे च यत्नवाचित्वे पाकं भावयतीत्यादौ भावयतेः करोतिपर्यायत्वं स्वीकृत्य यत्नवाचित्वं लक्षणया स्वीकर्त्तव्यम्। एवं रथो गच्छति, चैत्रो जानाति, इच्छतीत्यादौ अनुकूलव्यापारे गमनाद्याश्रयत्व एव वा लक्षणेति वदन्ति।

यदत्र भाट्टदीपिकाव्याख्याने प्रभावल्यां शम्भुभट्टैः मूलोक्तयत्नाख्यातार्थत्वस्थिरीकरणाय मतान्तरखण्डनपूर्वकं बहु यतितम्, यच्च तस्या एव व्याख्यानान्तरे भाट्टचिन्तामणौ श्रीवाञ्छेश्वरयज्वभिः पार्थसारथिमिश्रमतपरिपोषणाय बहुधा पराक्रान्तम् तदुभयं तत एवाऽवगन्तव्यम्। सर्वथा सिद्धम्—धात्वर्थातिरिक्ता आख्यातवाच्या भावना, तस्याश्च धात्वर्थान्वय इति।

तत्र यत्र फलबोधकपदान्तराश्रवणं तत्र धात्वर्थस्योद्देश्यत्वमङ्गीकृत्य तस्य भावनायां कर्मत्वेनाऽन्वयः। यथा पचतीत्यादौ पाकं करोतीति। यदा तु कर्मवाचकपदान्तरश्रवणम्, यथा ओदनं पचतीत्यादौ, तत्र धात्वर्थस्य करणत्वेनैवाऽन्वयः—पाकेनौदनं करोतीति। एवं 'यजेत स्वर्गकाम' इत्यादिवाक्येषु विधिघटितेषु आख्यातोपात्ताया भावनाया भाव्याकाङ्क्षायां यद्यपि समानपदोपात्तस्य धात्वर्थस्यैव भाव्यत्वेनाऽन्वयो युक्तः—यागं कुर्यादिति, तथापि तस्य द्रव्यव्ययायासादिबहुकष्टसाध्यत्वेन कष्टं कर्मेति न्यायेन

स्वयमनिष्टत्वात् अनिष्टे पुरुषाणां प्रेक्षावतां प्रवृत्त्यनुदयात् तं परित्यज्य स्वयमिष्टरूपमिष्टसाधनरूपं वा वस्त्वन्तरं किञ्चिद्भाव्यत्वेनाऽपेक्षते भावना। यच्च वस्तु स्वर्गादिकमिष्टरूपमिष्टसाधनरूपं वा मानान्तरेणाऽवगतं तदेव भाव्यत्वेन सम्बध्यते—स्वर्गं भावयेदिति। तत्र च धात्वर्थः करणम्। यजेत स्वर्गकाम इत्यत्र हि लिङा प्रवर्त्तनाऽभिधीयते। आख्यातेन चाऽऽर्थी भावना। धातुना यागः। तन्निष्ठकरणत्वं च लक्षणया प्रतिपाद्यते। स्वर्गकामपदं लक्षणया स्वर्गपरम्। प्रथमा च कर्मत्वपरा। अतश्च यागकरणिका स्वर्गभाव्यका भावना प्रवर्त्तनाविषय इति वाक्यार्थः। यागेन स्वर्गं भावयेदिति यावत्।

यद्यपि यागानुकूलभावनायां न यागः करणं भवितुमर्हति। प्रत्युत भावनाजन्यत्वाद्यागस्य यागकरणत्वमेव भावनायास्सिद्ध्यति तथापि कृते यागे सा फलोपहिता भवति। तादृश्याश्च तस्यां यागः करणं भवति। अत एव नाऽत्र लोकावगतं मुख्यं करणत्वम्। किन्तु भावनाकरणत्वं भावनाभाव्यनिर्वर्त्तकत्वम्। यागो हि भावनाभाव्यं स्वर्गादिकं निष्पादयति। अतः पारिभाषिकमत्र करणत्वमिति। एवं स्वर्गपुत्रपश्वादिकं फलं भावनायां भाव्यत्वेनाऽन्वितमपि यागेनैव जननीयमिति यागः फलं प्रति करणमिति श्रुत्या बोधितं भवति॥

## अपूर्वनिरूपणम्

तच्च करणत्वमाशुतरविनाशिनां कर्मणां यागहोमादीनां कालान्तरभाविस्वर्गादिकं प्रति न सम्भवतीति श्रुतकरणत्वनिर्वाहाय यागस्वर्गयोर्मध्ये यागजन्यं फलोत्पत्तिपर्यन्तावस्थायि अपूर्वाख्यं वस्तु किञ्चित्कल्प्यते—अग्निहोत्रज्योतिष्टोमादिभिरपूर्वं कृत्वा स्वर्गं सम्पादयेदिति। परैरपि **अस्तु दानाध्ययनादिरेव विचित्रो हेतुः जगद्वैचित्र्यस्येति चेन्न; क्षणिकत्वादपेक्षितस्य कालान्तरभावित्वात्।**

**चिरध्वस्तं फलायाऽलं न कर्मातिशयं विना ।**

इत्युक्तेः । *आचार्यशङ्करभगवत्पादैरपि*—**न चाऽनुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति । अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नामाऽस्तीति तर्क्यते** इति ।

न च क्लृप्तैर्यागध्वंसादिभिरेव फलोत्पत्तिरस्तु, किमर्थमतिरिक्ताप्रसिद्धकल्पनेति चेत्, न; ध्वंसस्य फलजनकत्वे तस्य नित्यत्वेन फलपरम्परोत्पत्तिर्न वारयितुं शक्या । न चोत्पन्नस्वर्गध्वंसस्य प्रतिबन्धकत्वं कल्प्यत इति वाच्यम्, गौरवात् । किञ्च गङ्गास्नानादिस्थलेऽनेकेषां जलसंयोगध्वंसानां व्यापारत्वं कल्पनीयं स्यात् । तच्चाऽतिगौरवम् । किञ्च यागध्वंसो न व्यापारः, प्रतियोगिध्वंसयोरेकत्र जनकत्वाभावात् । प्रत्युत प्रतिबन्धकत्वापत्तिः, कारणीभूताभावप्रतियोगित्वात् । अतो "धर्मः क्षरति कीर्त्तना"दित्यादिप्रमाणबलात् नाशायोग्यं किञ्चित् कल्पनीयम् । तदेवाऽपूर्वपदवाच्यम् । तच्च यागादेश्शक्तिरूपं, अवान्तरव्यापाररूपं वा । न चाऽन्यथासिद्धिः । शक्तेश्शक्तिमतो वा व्यापारेण व्यापारिणो वाऽन्यथासिद्धेरभावात् । न च शक्तिमतो व्यापारवतो वा यागादेर्नाशे तस्य कथं कुत्राऽवस्थानमिति शङ्कनीयम् । फलबलकल्प्यस्य तस्य यत्राऽवस्थाने फलोत्पत्तिः तत्रैव कल्पनाया उचितत्वात् । तदेवाऽपूर्वपदवाच्यम् । यथोक्तम्—

**शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते ।**
**तत्रैव साऽभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा ॥** इति ।

**कार्याऽनुमेयं हि तत् यत्र कार्यायाऽलं तत्रैव कल्पयितुं युक्तम् । तदाहितत्वाच्च तच्छक्तिः** इति च । न च वैयधिकरण्यं दोषाय । यथाऽङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्त्तते तथा

यागजन्यमपूर्वं नष्टेऽपि यागे कर्त्रात्मन्यनुवर्त्तताम्, को दोषः ? । अतश्च सिद्धमपूर्वम् । तच्च यावत्फलोदयं यजमानात्मन्यवतिष्ठते । उत्पाद्य फलं विनङ्क्ष्यतीति ।

## अपूर्वभेदः

तच्चाऽपूर्वं परमापूर्वसमुदायापूर्वोत्पत्त्यपूर्वाङ्गापूर्वभेदाच्चतुर्धा भिद्यते । साक्षात्फलजनकमपूर्वं **परमापूर्वम्** । उत्पत्त्यपूर्वसमुदायजन्यमपूर्वं **समुदायापूर्वम्** । अङ्गेभ्यस्सम्भवन्त्यङ्गापूर्वाणि ।

तथाहि—प्रथमं तावत्कर्मणां श्रुतफलसाधनत्वान्यथानुपपत्त्या कल्पितमपूर्वं फलाव्यवहितपूर्ववृत्तित्वात् साक्षात्फलसाधनत्वाच्च फलापूर्वं परमापूर्वमिति चोच्यते । तच्च सर्वाङ्गसहितप्रधानानुष्ठानानन्तरमुत्पद्यते । अङ्गानां क्रियारूपाणां क्षणिकानां प्रधानेन सह मिथस्साहित्यं स्वरूपतो न सम्भवतीति अपूर्वद्वारैव तद्वक्तव्यम् । तत्रैकप्रधानकर्मणि तेषामुत्पत्तिप्रकारः कथ्यते—अङ्गानि कानिचित् प्रधानानुष्ठानात्पूर्वमनुष्ठीयन्ते । कानिचिच्च तदनन्तरम् । येन च क्रमेण तान्यनुष्ठीयन्ते तेनैव क्रमेणऽपूर्वं जनयन्ति ।

तत्र यानि सन्निपत्योपकारकाणि प्रधानानुष्ठानात्पूर्वमनुष्ठीयमानान्यङ्गानि तानि स्वसंस्कार्ये द्रव्यदेवतादौ स्वानुष्ठानानन्तरमेव कञ्चनाऽतिशयमादधति । स च परम्परया प्रधानयागपर्यन्तमनुवर्त्तमानोऽनुष्ठिते तस्मिन् तज्जन्योत्पत्त्यपूर्वे उपकरोति । एवं च सन्निपत्योपकारकाणां पूर्वाङ्गानामुत्पत्त्यपूर्वोत्पत्तावुपयोगः । प्रधानानन्तरमनुष्ठीयमानानां तु तेषामुत्पन्नोत्पत्त्यपूर्वपरिपोषणे उपयोगः । यान्यारादुपकारकाण्यङ्गानि तान्यनुष्ठितमात्रेणैव यजमानात्मनि स्वीयमपूर्वं जनयन्ति । मध्येऽनुष्ठितं प्रधानमपि क्रियारूपत्वात् क्षणिकं सन्नोत्तराङ्गैस्सम्बन्धुमर्हतीत्यनुष्ठितमात्रादेव प्रधानादेकमपूर्वमुत्पद्यत इत्यङ्गीकर्त्तव्यम् । तदेवोत्पत्त्यपूर्वमित्युच्यते । उत्तराङ्गाण्यपि स्वानुष्ठानानन्तरमेव स्वापूर्वं जनयन्ति । तानि चाऽपूर्वाणि

यावच्चरमाङ्गानुष्ठानं यजमानात्मनि समवेत्य वर्तन्ते। उत्पन्ने चरमाङ्गापूर्वे मध्यवर्ति उत्पत्त्यपूर्वाख्यं प्रधानजन्यमपूर्वं परमापूर्वोत्पादने प्रयतते। तत्र चोपकुर्वन्ति तानि सर्वाण्यप्यङ्गापूर्वाणि। अङ्गापूर्वोपकृतं प्रधानापूर्वं परमापूर्वमुत्पाद्याऽङ्गापूर्वैस्सह विनश्यति। परमापूर्वन्तु यावत्फलोदयं यजमानात्मनि तिष्ठति। उत्पाद्य च फलं नश्यति। अत एकस्मात्कर्मणो न पुनः पुनः फलोत्पत्तिप्रसङ्गः। अनेकप्रधानकैकप्रयोगस्थले तु एकैकस्मात्प्रधानादेकैकमुत्पत्त्यपूर्वमुत्पद्यते। सर्वाणि तानि मिलित्वा स्वाङ्गापूर्वोपकृतानि परमापूर्वमेकं जनयन्ति।

## दर्शपूर्णमासयोर्विशेषः

दर्शपूर्णमासयोस्तु समुदायापूर्वमधिकम्। तत्र पूर्णमासे त्रीणि प्रधानानि सहाऽनुष्ठीयन्ते। एवं दर्शेऽपि। तत्र त्रिभिः प्रधानैर्मिलितैः स्वाङ्गापूर्वोपकृतैरेकं समुदायापूर्वमुत्पाद्यते। दर्शेऽपि तथैव। ताभ्यां द्वाभ्यां समुदायापूर्वाभ्यामेकं परमापूर्वमुत्पाद्यते। एवं चातुर्मास्येष्वपि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्येषु चतुर्ष्वपि पर्वसु पृथक् पृथगेकैकं समुदायापूर्वमिति चत्वारि समुदायापूर्वाणि। तेभ्य एकमेव परमापूर्वम्। ततश्च फलमिति। एवञ्चोत्पत्त्यपूर्वानन्तरं यत्र समुदायबोधकं वचनं तत्रोत्पत्त्यपूर्वेभ्यस्समुदायापूर्वम्। ततः परमापूर्वम्। ततः फलम्। यत्र तु तन्नाऽस्ति तत्रोत्पत्त्यपूर्वादेव परमापूर्वं ततश्च फलमिति सिद्धम्। केचित्तु परमापूर्वाङ्गीकरणे न प्रमाणमस्ति, उत्पत्त्यपूर्वस्यैव स्वाङ्गापूर्वोपकृतस्य फलजनकत्वमिष्यते कीर्तननाश्यत्वञ्चेति वदन्ति। सर्वथा तावदस्ति तदपूर्वमिति सिद्धम्।

## कर्मभेदः तत्प्रमाणानि च

तच्चाऽपूर्वं यागहोमादिरूपधात्वर्थजन्यमिति पूर्वमुक्तम्। तत्र देवतो-

१. See मीमांसाकौस्तुभ P. 62. L. 18.

देश्यकद्रव्यत्यागो **यागः**। स च 'इन्द्रायेदं न मम' इत्यादिस्वस्वत्वनिवृत्तिपूर्वकदेवतासबन्धापादनबोधकशब्दोच्चारणपूर्वको मानसिकव्यापारः। स एव चाऽऽहवनीयाद्यग्न्यधिकरणप्रक्षेपाधिको **होमः**। तत्र यागहोमयोः उद्देशांशः, त्यागांशः, प्रक्षेपांशः, इति त्रितयमप्यस्ति, तथाऽपि यागस्थले उद्देशांशत्यागांशौ समप्रधानभूतौ। प्रक्षेपस्त्वङ्गभूतः। होमस्थले तु त्रयाणामप्यंशानां समप्राधान्यम्। यजतिचोदनाचोदितो यागः। यथा—**"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"** इत्यादिः। जुहोतिचोदनाचोदितश्च होमः। यथा—**"अग्निहोत्रं जुहोति"** इति विवेक्तव्यम्। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानम्। एतेषां मिथो भेदकप्रमाणानि षट्—शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तररूपाणि।

## शब्दान्तरात्कर्मभेदः

तत्राऽपर्यायधातुनिष्पन्नानि एकप्रकरणगतान्याख्यातानि **शब्दान्तर**मिति शब्दान्तरलक्षणं *प्राचीनानाम्*[१]। विभिन्नधात्वर्थकत्वं शब्दान्तरत्वमिति *नव्याः*[२]। **"तेन सोमेन यजेत" "हिरण्यमात्रेयाय ददाति" "दाक्षिणानि जुहोती"**त्यादीनां एकज्योतिष्टोमप्रकरणपठितानां विभिन्नधात्वर्थावच्छिन्नानामाख्यातानां कर्मभेदकत्वम्। अतस्तानि यागदानहोमरूपाणि कर्माणि परस्परं भिन्नानि। धात्वर्थभेदाद्भावनाभेदः। भावनाभेदाच्चाऽपूर्वभेदः। तद्भेदाच्च फलभेद इति।

## अभ्यासात्कर्मभेदः

अनन्यपरविधिपुनःश्रवणमभ्यासः। 'दध्ना जुहोती'त्यादौ सत्यप्यभ्यासे कर्मभेदाभावादनन्यपरेति विशेषणम्। तेन च कर्मभेदः। **'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं**

१. See भाट्टदीपिकाव्या. शं. P. 158. P.
२. See भाट्टदीपिका P. 158.

**यजति'** इति हि पञ्चकृत्वो यजतिरभ्यस्तः। स च समिदादिवाक्यविहितानां कर्मणां परस्परं भेदं विनाऽनुपपन्नस्सन् तेषां भेदमापादयति। एकेनैव विधिना विधानसम्भवे विहितस्य पुनर्विधानायोगेन द्वितीयादिवाक्यवैयर्थ्यात्। न च प्रथमवाक्येन कर्मविधानमस्तु, द्वितीयादिवाक्यैस्तदपेक्षितो देवतारूपो गुणो विधीयतामिति वाच्यम्। देवतानां **'समिधो अग्न आज्यस्य व्यन्तु' 'तनूनपादग्न आज्यस्य वेतु'** इति हौत्रकाण्डे प्रयाजीययाज्यानुवाक्याक्रमे पठितैर्याज्यामन्त्रवर्णैरेव प्राप्तिसम्भवेन पुनर्विधिवैयर्थ्यात्। अतस्समिदादिपदानि कर्मनामधेयानि। तदन्यस्य कस्यचिद्विधेयस्याऽभावात् अनन्यपरविधिपुनःश्रवणस्य कर्मभेदापादकत्वमेवेत्यभ्यासात्कर्मभेदसिद्धिः।

सत्यपि विधिपुनःश्रवणे क्वचित्कर्मभेदो नाऽङ्गीक्रियते। यथा **"य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजत"** इत्यत्र। तत्र हि **"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्याञ्चाऽच्युतो भवति" "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" "तावब्रूतामग्नीषोमावाज्यस्य नावुपांशु पौर्णमास्यां यजन्नुपांशुयाजमन्तरा यजति"** इति वाक्यत्रयेण पौर्णमास्यां यागत्रयं विहितम्। तस्य 'य एवं विद्वान् पौर्णमासीं यजते' इति वाक्येन समुदायरूपेणाऽनुवादः। एवं **"ऐन्द्रं दध्यमावास्यायां" "ऐन्द्रं पयोऽमावास्यायां"** इति वाक्यद्वयेन पूर्वोक्ताग्नेयवाक्यसहकृतेनाऽमावास्यायां यागत्रयं विहितम्। तस्य 'य एवं विद्वानमावास्यां यजते' इति समुदायरूपेणाऽनुवादः। न तु ताभ्यां यागान्तरविधानम्, गौरवात्। अनुवादप्रयोजनञ्च पौर्णमासीरूपकालयोगिनां त्रयाणां यागानां पूर्णमासनामसिद्धिः। एवममावास्याकालयोगिनां त्रयाणां यागानां दर्शपदवाच्यत्वसिद्धिः। तत्प्रयोजनञ्च **"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"** इति फलवाक्योपादानात् फलसम्बन्धसिद्धिः। अत्र च उत्पत्तिवाक्ये येषां

कालश्रवणं तेषामेव ग्रहणम्। अतः प्रयाजादीनां तत्कालानुष्ठेयत्वे सत्यपि उत्पत्तिवाक्ये कालाश्रवणान्न दर्शपूर्णमासशब्दवाच्यत्वमिति न तेषां फलसम्बन्धः, किन्तु दर्शाद्यङ्गत्वमेवेति ।

न च 'य एवं विद्वानि'ति विद्वद्वाक्यद्वय एव पौर्णमास्यमावास्यारूपकर्मद्वयविधानमस्तु । तदुद्देशेनाऽऽग्नेयादिवाक्यैर्गुणा विधीयन्तामिति वाच्यम्। तत्र अग्निदेवता, पुरोडाशद्रव्यं, अमावास्यादिकाल इत्याद्यनेकगुणश्रवणात् प्राप्तकर्मोद्देशेनाऽनेकगुणविधाने वाक्यभेदापत्तेः । तदुक्तम्—

प्राप्ते कर्मणि नाऽनेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति ।

अतश्चाऽऽग्नेयादिवाक्यान्येव कर्मविधायकानि, विद्वद्वाक्यद्वयं तदनुवादकमिति सिद्धम् ॥

## सङ्ख्यया कर्मभेदः

काम्येष्टिकाण्डे "वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः" इति विहितायास्साङ्ग्रहणीष्टेस्सन्निधौ श्रुते "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इत्यत्र सङ्ख्यया कर्मभेदः। तत्र हि त्रित्वसंख्या आहुतिविशेषणत्वेन श्रुता । सा च स्वाश्रयस्य कर्मणो भेदं विना निवेष्टुमशक्या । द्वित्वादिसङ्ख्यानां स्वाश्रयप्रतियोगिकस्वाश्रयानुयोगिकभेदव-

---

१ जयन्तभट्ट writes in his न्यायमञ्जरी that his grand father performed this साङ्ग्रहणेष्टि and after finishing Iṣhti immedietely he obtained one ग्राम named गौरमूलक as the result of Iṣhti. See P. 250 part I Chow. edn तथाह्यस्मत्पितामह एव ग्रामकामः साङ्ग्रहणीं कृतवान् । स इष्टिसमाप्तिसमनन्तरमेव गौरमूलकं ग्राममवाप ।

२ द्वौ घटौ इत्यत्र स्वं द्वित्वम्, स्वाश्रयो घटः, तत्प्रतियोगिकः, स्वं द्वित्वं, स्वाश्रयो घटान्तरं तदनुयोगिकश्च पूर्वघटप्रतियोगिको घटान्तरवृत्तिः, एवमेतद्घटप्रतियोगिकस्तद्घटवृत्तिश्च यो भेदस्तद्वत् घटद्वयम्, तद्वृत्तित्वम्, अनेकवृत्तित्वमिति यावत् । एवं त्रित्वादिपरार्धपर्यन्तानां बोध्यम् ।

द्वृत्तित्वनियमात् । तादृशी च त्रित्वसंख्या स्वाश्रयस्य कर्मणो भेदमापादयतीति सङ्ख्ययाऽत्र कर्मभेदः । इदञ्च *वृत्तिकारमते*नोदाहरणम् ।

*भाष्यकारस्तु*–अत्राऽऽहुतिविशेषणीभूतया त्रित्वसंख्यया कर्मभेदस्य स्पष्टं प्रतीतेः पूर्वपक्षानुत्थितिं मन्वानः वाजपेयप्रकरणगतं **"सप्तदश प्राजापत्यान् पशूनालभत"** इति वाक्यमुदाजहार। तत्र द्रव्यदेवतासम्बन्धानुमितयागगतसप्तदशत्वसङ्ख्यया कर्मभेदः । तथा हि–

'प्राजापत्या'नित्यत्र प्रजापतिदेवतया प्रथमं द्रव्यस्य सम्बन्धः । ततश्च तस्य बहुत्वेन । प्रजापतिर्देवता अस्येति प्राजापत्यः । प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या इति । एवञ्च द्रव्यदेवतासम्बन्धानां बहुत्वात् यावन्तस्सम्बन्धाः तावन्तो यागास्सिद्ध्यन्ति । प्रकृते च सप्तदशसङ्ख्याविशेषितास्सप्तदश यागाः सम्पद्यन्ते । यदि तु द्रव्यस्य प्रथमं बहुत्वेनाऽन्वयोऽङ्गीक्रियेत ततश्च देवतया, तदाऽनेकद्रव्याणामेको देवतासम्बन्ध इति एक एव यागो लभ्येत । प्रजापतिर्देवता एषामिति प्राजापत्या इति । तच्च न युक्तम् । तद्धितार्थस्य द्रव्यस्य प्रथमं देवतया सहैव सम्बन्धो युक्तस्स्यात्, अन्तरङ्गत्वात् । प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्यैव न्यायसिद्धत्वाच्च । न च सम्बन्धानेकत्वेऽपि लाघवादेकयागकल्पनमेवाऽस्त्विति वाच्यम् । लाघवस्य न्यायरूपतया तदपेक्षया एकपशुनिष्पन्नैकादशावदानगणप्रापकस्य चोदकस्य शास्त्रत्वेन तस्य प्राबल्यात् तस्यैव नियामकत्वकल्पनौचित्यात् । अत्र सर्वत्र प्रकृतिभूतोऽग्नीषोमीयपशुयाग एव । तत्रैक एव पशुः । तत्रैव च **"एकादशाऽवदानान्यवद्यति"** इत्येकादशावदानगण उक्तः । स च परम्परया प्राजापत्यपशुषु प्राप्तः । तत्रैकैकस्मिन् पशौ एकादशावदानगणेऽनुष्ठिते

---

१ यत्वत्र भाट्टभास्करे 'तिस्र आहुती'रित्यस्य भाष्यकारीयोदाहरणत्वं 'सप्तदश प्राजापत्यान्' इत्यस्य च वार्तिककारीयोदाहरणत्वमुक्तं, तत् लेखकप्रमादकृतमिति प्रतिभाति ।

चोदकोऽनुगृहीतो भवति । एवञ्चैकपश्वपादानकैकादशावदानगणसम्पादित एको यागः । एवं सप्तदश यागा इति सिद्धस्सङ्ख्यया कर्मभेदः ॥

## संज्ञया कर्मभेदः

साङ्गज्योतिष्टोमविध्यनन्तरं श्रुते **"अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः, एतेन सहस्रदक्षिणेन यजेत"** इति वाक्ये ज्योतिरादिभिस्संज्ञाभिः प्रकृतज्योतिष्टोमाद्भिन्ना यागा विधीयन्ते । न च **"वसन्ते वसन्ते ज्योतिषा यजेते"**तिवत् प्रकृतज्योतिष्टोमस्यैवाऽनुवादोऽस्त्विति वाच्यम् । तत्र ज्योतिष्टोमप्रकरणानुवृत्तेस्तद्ग्रहणम् । प्रकृते त्वथशब्देन प्रकरणनिवृत्तेस्स्पष्टं प्रतीयमानत्वात् । अतः कर्मत्रयं ज्योतिरादिसंज्ञात्रयभिन्नं विधीयते । तस्य च सहस्रदक्षिणस्य फलोद्देशेन प्रयोगैक्यविधिरिति सिद्धः कर्मभेदः । एवञ्च प्रकृतकर्मनाम्नः पर्यायत्वेन तदेकदेशत्वेन श्रूयमाणायाः प्रकरणान्तरगतायाः संज्ञायाः कर्मभेदकतेति फलितम् ॥

## गुणात्कर्मभेदः

पूर्वस्मिन् कर्मण्यसम्भवन्निवेशो गुणोऽपि कर्मभेदावहः । असम्भवश्च त्रेधा—क्वचिदनेकगुणोपादानेन विधौ वाक्यभेदापातात्, क्वचित्प्रबलगुणावरोधात्, क्वचिच्चैकप्रसरताभङ्गभयात् । तत्राऽऽद्यो यथा **"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्याञ्चाऽच्युतो भवति"** इत्यत्राऽग्निदेवतायाः पुरोडाशस्य कपालानां तद्गतसंख्यायाः कालस्य चेत्यनेकेषां गुणानां प्राप्तकर्मोद्देशेन विधाने वाक्यभेदः । अतः पूर्वत्राऽनिविशमानं गुणानेकत्वं स्वविशिष्टकर्मान्तरविधायकं सत् पूर्वस्मात्कर्मणः स्वविशिष्टं कर्म भिनत्ति इति ।

द्वितीयस्योदाहरणन्तु—चातुर्मास्येषु वैश्वदेवाख्ये प्रथमे पर्वणि श्रुतं **"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिन"**मिति । तत्र प्रथमेन वैश्वदेववाक्येन विश्वदेवदेवताक आमिक्षाद्रव्यको

यागो विधीयते। द्वितीयेन वाजिदेवताकं वाजिनद्रव्यकं यागान्तरम्। न च पूर्ववाक्यविहितयाग एव द्वितीयवाक्येन गुणविधानमस्त्विति वाच्यम्। तस्य स्ववाक्यविहितेनोत्पत्तिशिष्टेनाऽऽमिक्षाद्रव्येणाऽवरुद्धत्वाद्गुणान्तरस्य तत्र निवेशासम्भवात्। सर्वत्र हि द्रव्यदेवतादिको गुणः सत्यामेवाऽऽकाङ्क्षायां विधातुं शक्यते। तत्र कर्मणो द्रव्याकाङ्क्षायां स्ववाक्योपात्तस्यैव द्रव्यस्य पूर्वमन्वयात् तेनैवाऽऽकाङ्क्षाशान्तेः वाक्यान्तरबोधितस्य गुणस्य तेनाऽग्रहणात्। अत एव साम्प्रदायिकोक्तिः—उत्पत्तिशिष्टगुणावरोधे न गुणान्तरं विधीयते। उत्पत्तिशिष्टस्य प्राबल्यात्, इति। अतश्च पूर्वत्राऽसम्भवन्निवेशो गुणः स्ववाक्योपात्तं कर्म भित्त्वा तत्र निविशत इति प्रबलगुणावरोधात्तत्र कर्मभेदः। अतितप्ते पयसि दधिप्रक्षेपे कृते तद्द्विधा भवति। एकं घनीभूतम्। अपरं द्रवीभूतम्। तत्र घनीभूतं द्रव्यमामिक्षेत्युच्यते। द्रवीभूतं तक्रसदृशं वाजिनमित्युच्यते। अत्र 'वाजिभ्यो वाजिन' मित्येतदेवोदाहरणम्। वैश्वदेववाक्यन्तु तदुपपादनार्थं गृहीतम्।

तृतीयस्योदाहरणन्तु—**'वषट्कर्तुः प्रथमभक्ष'** इति। अनेन वषट्कर्तुः प्राथम्यविशिष्टं भक्षणं पूर्वविहितभक्षणेभ्योऽन्यद्विधीयते। न च प्राप्तवषट्कर्तृभक्षोद्देशेन प्राथम्यमात्रं विधीयताम्। सोमे समाख्यया तत्तन्नैमित्तिके च भक्षणे बहूनामृत्विजां प्राप्ते यो वषट्कारमुच्चारयति होत्रादिः ग्रहे चमसे वा स एव सर्वप्रथमं भक्षयेत्, अन्ये तु तदनन्तरमिति वाच्यम्। एकप्रसरताभङ्गापत्तेः। प्राप्तभक्षोद्देशेन प्राथम्यमात्रविधाने उद्देश्यस्य प्रथमप्रतीत्यावश्यकत्वात् भक्षशब्देन प्रथमं स्वार्थः प्रतिपादनीयः। पश्चाच्च प्रथमशब्देन स्वार्थ इति वक्तव्यम्। न चैतत्संभवति। समस्यमानपदयोर्युगपत्प्रसरत्वेन विशिष्टार्थप्रतिपादकत्वात्। इयमेव च शब्दनामेकप्रसरता यत्समस्यमानयोः पदयोर्विशिष्टैकार्थप्रतिपादकत्वम्। अन्यथा एकार्थीभावलक्षणसामर्थ्याभावेन समासासम्भवात्। तस्मात् वषट्कारे

निमित्ते प्राथम्यविशिष्टं समाख्यादिभक्षणतो भिन्नं भक्षान्तरं विधीयत इति । अतस्सिद्धस्त्रिविधादपि गुणात् कर्मभेदः ।

'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र तु न गुणात्कर्मभेदः । तथाहि—नाऽत्र होमो विधातुं शक्यते । तस्य 'अग्निहोत्रं जुहोती' त्यनेनैव विहितत्वात् । नाऽपि दध्नो होमसम्बन्धविधानम्, तस्य 'दध्ना जुहोती' त्यनेनैव विहितत्वात् । नाऽपि फलम्, दधिपदवैयर्थ्यापत्तेः । अतो नित्यहोमार्थतया पयःप्रभृतिभिर्द्रव्यैर्विकल्पेन प्राप्तस्य दध्नः इन्द्रियरूपफलार्थतया पुनर्विधानम् । अतश्चेन्द्रियोद्देशेन दधिरूपे गुणे विहिते सिद्धस्य वस्तुनो व्यापारावेशं विना फलोत्पादासामर्थ्यात् अन्यथा विधिं विनापि फलोत्पत्तेर्निवारयितुमशक्यत्वेन विधिवैयर्थ्यापत्तेः तदनुग्रहाय मध्ये कस्यचित् व्यापारस्याऽपेक्षायां स्वसाध्यभोजनदानहोमाद्यनेकव्यापारप्रसक्तावपि प्रकरणेन होमस्यैव प्रापणात् तस्यैवाऽऽश्रयत्वम् । अत एवाऽत्रत्यो जुहोतिः प्रकरणप्राप्तहोमानुवादक एव, न प्रापकः । फलोद्देशेन गुणमात्रविधिपरत्वोपपत्तेश्च नाऽनेकविधानकृतो वाक्यभेदः ।

यद्यपि दधिनिष्ठकरणत्वनिरूपको होम एव शब्दादानीयते तथापि इन्द्रियपदवैयर्थ्यापत्त्या दधिनिष्ठकरणत्वं पारस्परिकमिन्द्रियनिरूपितमिति स्वीक्रियते । एवञ्च दधिनिष्ठकरणतेन्द्रियनिरूपिता । तस्य च दध्यादेर्गुणस्य स्ववृत्तिकरणतासम्पादनाय या स्वकृतिसाध्यधात्वर्थविशेषापेक्षा सैवाऽऽश्रयाकाङ्क्षा । तयैव धात्वर्थान्वय इति सिद्धम् । अतश्चाऽदृष्टाद्वारकसम्बन्धेन गुणविशेषावच्छिन्नत्वमाश्रयत्वमित्याश्रयलक्षणम् । न तु फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रय इति पार्थसारथ्याद्युक्तम् । तस्याऽव्याप्त्यादिदोषग्रस्तत्वात् । विस्तरस्तु अस्मत्कृतसारविवेचिन्यां मीमांसान्यायप्रकाशव्याख्यायां द्रष्टव्यः ।

---

१. See सारविवेचिनी P. 15. L. 15. chow. edn.

## प्रकरणान्तरात्कर्मभेदः

अनुपादेयगुणविशिष्टा पूर्वकर्मानुपस्थितिः **प्रकरणान्तरम्** । तेनाऽपि कर्मभेदः सिद्ध्यति । तथाहि—अस्ति कुण्डपायिनामयनाख्यस्सत्रविशेषस्संवत्सरसाध्यः । तत्सन्निधौ श्रूयते—'**उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति । मासं दर्शपूर्णमासाभ्यां यजन्ते**' इत्यादिः । तत्र प्रसिद्धान्नित्याग्निहोत्रदर्शपूर्णमासादेर्भिन्नं कर्माऽत्र विधीयते । न च नैयमिकाग्निहोत्रमनूद्यैवाऽत्र मासरूपो गुणो विधीयतामिति वाच्यम् । तेषामतिदूरस्थत्वेनाऽत्राऽनुपस्थितेः तदुद्देशेन गुणविधानासंभवात् । न च नाम्नस्तदुपस्थापकत्वम् । तस्याऽग्निदेवताककर्ममात्रोपस्थापकत्वेऽपि पूर्वकर्मोपस्थापकत्वे मानाभावात् । न ह्यग्निदेवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति । यत्रोपादेयगुणश्रवणम्, तत्र विधिशक्तेर्गुणे सङ्क्रमात् धात्वर्थस्याऽनुवादापेक्षायां दूरस्थानामपि कर्मणां कथञ्चिदनुवादो युक्तः । यथा—'यदाहवनीये जुहोति' इत्यत्र । प्रकृते तु मासस्याऽनुपादेयत्वात् तत्र विधिशक्तेरसङ्क्रमात् धात्वर्थ एव सा सङ्क्रामतीति तस्यैव विधेयत्वम् । धातुना च न पूर्वकर्मोपस्थितिः । अतोऽपूर्वमेव कर्मोपसदुत्तरकालिकत्वमासादिविशिष्टं विधीयते । तस्य चाग्निहोत्रपदं गौण्या वृत्त्या नामधेयम् । अनेकत्र शक्तिकल्पनायां गौरवात्, प्रमाणाभावाच्च । नित्याग्निहोत्रसादृश्यञ्चाऽत्र तदीयधर्मवत्त्वरूपं गौणीवृत्तिनिमित्तम् । तच्च न प्रमाणान्तरावगतमित्यनेनैव पदेन साध्यसादृश्यविधयाऽवबोध्यते । तेन च तदीयधर्माणामत्राऽतिदेशः । अतस्सिद्धः प्रकरणान्तरात्कर्मभेदः । अत्र कालरूपोऽनुपादेयगुणः कर्मभेदोपयोगी ।

एवं देशनिमित्तफलसंस्कार्यरूपाणामप्यनुपादेयगुणानां योगे सति प्रकरणान्तरात्कर्मभेदो द्रष्टव्यः । तत्र देशनिमित्तो भेदः "**सरस्वत्या दक्षिणेन तीरेणाऽऽग्नेयोऽष्टाकपालः**" इत्यत्र दार्शपौर्णमासिकाग्नेयप्र-

तियोगिकः, **'सत्रायाऽऽगूर्य विश्वजिता यजेत'** इत्यत्र सत्रार्थं सङ्कल्पं कृत्वा तदननुतिष्ठतः तदकरणनिमित्तस्य विश्वजिद्यागस्यैकाहकाण्डपठितात् स्वर्गार्थविश्वजितो भेदो निमित्तकृतः, **'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः'** इत्यत्र फलरूपानुपादेयगुणकृतः प्रसिद्धाग्नेयाद्भेदः, **'औदुम्बरीं प्रोक्षति'** इत्यत्र प्रोक्षणस्य प्रसिद्धव्रीहिप्रोक्षणाद्दार्शपौर्णमासिकाद्भेदस्संस्कारकृतश्च द्रष्टव्यः । **रुक्कामः** तेजस्कामः । एवमनुपादपञ्चकयोगात् कर्मभेदः प्रकरणान्तरन्यायेन । अनुपादेयपञ्चकं च पूर्वाचार्यैस्सङ्गृहीतम् । तद्यथा—

**देशः कालो निमित्तं च फलं संस्कार्यमेव च ।**
**इति मीमांसकाः प्राहुरनुपादेयपञ्चकम् ।।** इति ।

एवं शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तररूपैष्षड्भिः प्रमाणैः कर्मभेदो निरूपितः । इमानि शब्दान्तरादीनि प्रमाणानि षडुत्पत्तिविधेस्सहकारिभूतानि ।

**ननु** को नामोत्पत्तिविधिः ? उच्यते—कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । द्रव्यदेवतादिसम्बन्धबोधनमन्तरा कर्मस्वरूपमात्रं प्रमाणान्तरानधिगतं येन प्रथममवबोध्यते स **उत्पत्तिविधिः** । यथा **"अग्निहोत्रं जुहोती"**ति । अनेनहि वाक्येन प्रमाणान्तरानवगतमग्निहोत्राख्यं कर्म कर्त्तव्यतया बोध्यते—अग्निहोत्रहोमेनेष्टं भावयेदिति । उत्पत्तिवाक्ये कर्मणः करणत्वेनाऽन्वयः । विधिर्हि पुरुषार्थे पुरुषं प्रवर्त्तयन् स्वस्य प्रवर्त्तकत्वसिद्ध्यर्थं स्वविषयस्य यागादेरिष्टभाव्यकत्वमाक्षिपतीत्युक्तं विधिनिरूपणावसरे । अत एव क्वचिद्विधिवाक्ये फलपदाश्रवणेऽपि फलसामान्यवाचकेष्टपदाध्याहारेणैव वाक्यार्थसम्पादनम्—इष्टं भावयेदिति । तस्य च स्वर्गादिविशेषरूपत्वेन वाक्यान्तरेणाऽवगतिः । एवं भावनायामिष्टसामान्यस्य स्वर्गादेरिष्टविशेषस्य वा फलत्वेनाऽन्वये तस्य साधनाकाङ्क्षायां धात्वर्थस्तत्र

साधनत्वेनाऽन्वयं लभते--यागेनेष्टं भावयेदेति। एवञ्च उत्पत्तिवाक्ये धात्वर्थस्य करणत्वेनाऽन्वये सति तत्समानाधिकरणस्य नाम्नोऽपि तथैवाऽन्वयः ज्योतिष्टोमेन यागेन स्वर्गं भावयेदिति। अत एव नामधेयेषु सर्वत्र तृतीयाविभक्तिश्रवणमुपपद्यते। यत्तु क्वचिद्द्वितीयाश्रवणं **'अग्निहोत्रं जुहोती'** त्यादौ तत्र द्वितीयायाः करणत्वे लक्षणा। अन्यथाऽन्वयानुपपत्तेरिति। एवं प्रथमद्वितीयाभ्यामध्यायाभ्यामुत्पत्तिविधिरेव सपरिकरो निरूपितो वेदितव्यः ॥

*इति कर्मभेदनिरूपणम्*

**इति तन्त्रसिद्धान्तरत्नावल्यां द्वितीयपरिच्छेदे कर्मभेदनिरूपणं नाम प्रथमः प्रकाशः ॥**

---

## अङ्गत्वनिरूपणम्

एवं प्रमाणषट्कभिन्नानां कर्मणामङ्गाङ्गिभावो निरूपणीयः। तत्र **अङ्गत्वं** परोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वम्। न तूपकारकत्वमविनाभावो वा। जामात्रर्थं प्रज्वालितस्य दीपस्य शिष्योपकारकत्वेऽपि तदङ्गत्वाभावात्। **'गोदोहनेन पशुकामस्य प्रणये'**दित्यादौ पशुरूपफलाङ्गस्य गोदोहनस्य प्रणयनोपकारकत्वेऽपि तदङ्गत्वाभावाच्च। दर्शपूर्णमासयोराग्नेयाग्नीषोमीयादेः परस्परमविनाभावेऽप्यङ्गत्वाभावाच्च। तदतिरिक्तस्य कस्यचिन्निर्वक्तुमशक्यत्वाच्च। अतः पूर्वोक्तमेव लक्षणं युक्तम्। दर्शपूर्णमासोद्देशप्रवृत्तस्य पुरुषस्य या प्रयाजादिविषयिणी कृतिः तत्र प्रयाजादेः कारकत्वेन विहितत्वाल्लक्षणसमन्वयः। इदमेव च पारार्थ्यमुच्यते। यत्तु परोद्देशप्रवृत्तकृतिव्याप्यत्वमङ्गत्वमित्यङ्गत्वलक्षणमुक्तं न्यायप्रकाशे, तदयुक्तम्—देशकालादेरसङ्ग्रहापत्तेः। तेषामप्यङ्गत्वावश्यम्भावात्। तच्च विनियोगविधिगम्यम्। **विनियोगो** नामाऽङ्गत्वबोधनं, तत्परो विधिः **विनियोगविधिः**। यथा 'दध्ना जुहोती'ति। अनेन हि दध्नो

होमाङ्गत्वं बोध्यते—दध्ना होमं भावयेदिति । एतस्य विनियोगविधेरङ्गत्व-बोधनाख्ये कार्ये सहकारिकारणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या-रूपाणि षट् प्रमाणानि ।

## श्रुतिनिरूपणम्

तत्र श्रवणमात्रादेवाऽङ्गत्वबोधकः शब्दः श्रुतिः । द्वितीयातृतीयादयो हि विभक्तयः स्वार्थबोधनेऽन्यत् किञ्चिदनपेक्षमाणाः कर्मत्वकरणत्वादिकं स्वार्थं झटित्येवाऽवबोधयन्ति । तत्र तृतीयया साक्षादेवाऽङ्गत्वमुच्यते । द्वितीयया कर्मत्वमवबोध्य तत्समभिव्याहृतस्याऽङ्गत्वमाक्षिप्यत इति विशेषः । श्रवणमात्र इति लिङ्गादिव्यावृत्त्यर्थम् । तेषां हि श्रुत्यादिकल्पनापुरस्सर-मेवाऽङ्गत्वबोधकत्वम् , न श्रुतमात्रादिति ।

सा च त्रिविधा—विभक्तिरूपा, समानाभिधानरूपा, एकपदरूपा चेति । तत्र विभक्तिरूपा प्रथमाशेषषष्ठीरहिता सर्वाऽपि विभक्तिः । तत्र **'व्रीहीन् प्रोक्षती'**त्यत्र द्वितीयाश्रुत्या प्रोक्षणस्य व्रीह्यङ्गत्वम् । द्वितीया हि साध्यत्वमवबोधयन्ती परिशेषात्तत्सहकृतप्रोक्षणस्य व्रीह्यङ्गत्वं बोधयति—प्रोक्षणेन व्रीहीन् सम्पादयेदिति । अत्र प्रोक्षणं न व्रीहिस्वरूपसम्पा-दनार्थम्, तेषां प्रोक्षणात्पूर्वमपि सत्त्वेन स्वरूपसम्पादनानुपपत्तेः । किन्तु अपूर्वसाधनत्वाकारेण, प्रोक्षणे कृत एव व्रीहीणां यागीयापूर्वजनकता सिध्येत् नाऽन्यथेति । एवञ्च प्रोक्षणेनाऽपूर्वसाधनीभूतान् व्रीहीन् सम्पादयेति फलितोऽर्थः । अत्र च न व्रीहित्वस्योद्देश्यतावच्छेदकत्वम् । व्रीहिपदस्याऽपूर्वसाधनत्वलक्षणावश्यकत्वे तावन्मात्रेण तस्य कृतार्थत्वात् । किन्तु अपूर्वसाधनत्वमेव तत् । तेन यवानामपि अपूर्वसाधनत्वाकारेणो-देश्यत्वं सिद्ध्यतीति तेष्वपि प्रोक्षणसिद्धिः । तण्डुलनिष्पत्तिद्वारेति विशेष-णाच्च नाऽन्यत्र प्रोक्षणप्रसक्तिः । एवमदृष्टसंस्कारस्थले सर्वत्राऽपि बोध्यम् ।

**"दध्ना जुहोती"**त्यादौ तृतीयाश्रुत्या दध्नो होमाङ्गत्वम् । अत्र

हि दध्नेति तृतीयया करणत्वं बोध्यते । तच्च स्वसमभिव्याहृतहोमनिरूपितम्—दध्ना होमं भावयेदिति । एवं "**अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती**"त्यत्र आरुण्यस्य सोमक्रयाङ्गत्वं तृतीयाश्रुत्या । अत्र हि सोमभाव्यिका आरुण्यादिचतुष्टयकरणिका भावना विधीयते । एवं हि तत्र बोधः—आरुण्यकरणिका पिङ्गाक्षीकरणिका एकहायनीकरणिका क्रयकरणिका सोमकर्मिका भावनेति । अरुणाशब्दो हि आकृत्यधिकरणन्यायेन अरुणगुणं ब्रूते, न तद्विशिष्टं द्रव्यम् । उक्तं हि *वार्तिककृता*—

**अन्वयव्यतिरेकाभ्यां यं कदाचिन्न मुञ्चति ।**
**स एव तस्य वाच्योऽर्थो गुणश्चैष न मुञ्चति ॥** इति ।

पिङ्गाक्ष्येकहायनीशब्दौ बहुव्रीहिसमासनिष्पन्नौ द्रव्यवाचिनौ, यौगिकत्वात् । सर्वत्र यौगिकशब्दानां द्रव्यमात्रवाचित्वात् । यथोक्तम्—

**सर्वत्र यौगिकैश्शब्दैर्द्रव्यमेवाऽभिधीयते** । इति ।

अत्र बहुव्रीहिस्थलेऽन्यपदार्थे शक्तिरिति वार्तिकादौ । पदद्वये लक्षणेति तु बहवः । एवञ्च आरुण्यकरणिका, पिङ्गाक्षीकरणिका, एकहायनीकरणिका, क्रयकरणिका भावना इति प्राथमिकश्शाब्दबोधः । अनन्तरञ्च परस्परसम्बन्धजिज्ञासायामारुण्यादिषु त्रिषु पदेषु मत्वर्थलक्षणामङ्गीकृत्य आरुण्यविशिष्टेन, पिङ्गाक्षीविशिष्टेन, एकहायनीविशिष्टेन, क्रयेण सोमं सम्पादयेति द्वितीयबोधः । ततः आरुण्येन पिङ्गाक्ष्या एकहायन्या क्रयं भावयेदिति तृतीयः । आरुण्येन प्रकृतक्रयापूर्वसाधनीभूतं द्रव्यं परिच्छिन्द्यादिति चतुर्थः । *प्राचीनास्तु*—प्राथमिकबोध एव अरुणादिपदत्रये लक्षणामङ्गीकृत्य आरुण्यपिङ्गाक्ष्यकहायनीविशिष्टक्रयकरणिका सोमभाव्यिका भावना इति

१ अत्र 'गवा' इति विशेष्यमध्याहृत्य वाक्यपूरणम्, पूर्वं तस्या एव प्रक्रान्तत्वात् । एव च अरुणवर्णा पिङ्गाक्षी एकवर्षवयस्का गौस्सोमक्रयसाधनमिति फलितम् ।

तं समर्थयन्ति। सर्वथा सिद्ध '**मरुणया पिङ्गाक्ष्या**' इत्यत्र तृतीयाश्रुत्या आरुण्यस्य क्रयाङ्गत्वम्।

अत्र अरुणाशब्दस्य गुणवाचकस्याऽपि **गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीति** न्यायेन गवानुसारेण स्त्रीप्रत्ययान्तत्वं बोध्यम्। एवं '**सोमेन यजेत**' इत्यत्राऽपि सोमकरणिका यागकरणिका इष्टभाव्यिका भावनेति प्राथमिकबोधे जाते अनन्तरं फलकरणयोस्सम्बन्धवेलायां सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेत् इति द्वितीयबोधो जायते। ततश्च सोमयागयोस्साध्यसाधनभावस्तृतीयबोधे—सोमेन यागं भावयेदिति नवीनमते। प्राचीनमते तु प्राथमिकबोध एव मत्वर्थलक्षणेति विशेषः।

"**मैत्रावरुणाय दण्डं प्रयच्छती**"त्यत्र चतुर्थीश्रुत्यां दण्डकर्मकदानस्य मैत्रावरुणार्थत्वम्। अत्र हि '**दण्डेन दीक्षयति**' इति दीक्षांर्थं[1] यजमानस्य दण्डधारणमुक्तम्। तस्य च '**क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति**' इत्यनेन विधिना सोमक्रयानन्तरं मैत्रावरुणनाम्ने ऋत्विजे देयत्वेन विधिः। अतश्च चतुर्थीश्रुत्या दण्डदानस्य मैत्रावरुणार्थत्वमिति।

"**मध्यात्पूर्वार्द्धादवद्यति**" "**उत्तरार्द्धात्स्विष्टकृते समवद्यति**" इत्यादौ मध्योत्तरार्द्धदेशादेरवदानाङ्गत्वं पञ्चमीश्रुत्या। **यच्चत्र** *भाट्टभास्करे* "**अग्नेस्तृणान्यपचिनोति**" इति वाक्ये उपचिनोतीति पठित्वा अग्न्यपादानकतृणोपचयेनाऽग्नेरबहिःपातस्संस्कारो भवतीत्युक्तम्। तदनवधानेन। न ह्यत्र तृणोपचयो विधीयते। न वा तेनाऽग्नेरबहिःपातो भवति। अग्निहोत्रप्रकरणगतमिदं वाक्यम्। अनेनाऽग्निहोत्राङ्गभूतोपस्था-

---

१ ऋत्वङ्गभूतयमनियमपरिग्रहो दीक्षा इति पार्थसारथिः। See शास्त्रदी० P. 435. L. 9. अदृष्टरूपयमनियमपरिग्रहानुकूलयोग्यता दीक्षा इति खण्डदेवः See भाट्टदी० II Vol. P. 199 L. 19. Mysore edn.

नानन्तरमग्निपरिस्तरणोपयुक्तानां बर्हिषां ततोऽपनयनं विधीयते । तेनाऽग्नेरबहिःपातस्य कथं सिद्धिः ? "**यदाहवनीये जुहोती**"त्यत्र आहवनीयस्याऽग्नेर्वैदिकनिखिलहोमार्थत्वं सप्तमीश्रुत्या ।

यजेतेत्यत्र आख्याताभिहितभावनायां समानाभिधानश्रुत्या सङ्ख्यादेरन्वयः । समानमेकम भिधानमभिधायकं प्रत्ययरूपं यत्र सा **समानाभिधानश्रुतिः** । **एकपदश्रुत्या** च धात्वर्थस्य भावनाङ्गत्वम् । इति त्रिविधा श्रुतिः । अत्र च पूर्वपूर्वस्याः प्राबल्यमुत्तरोत्तरस्या दौर्बल्यमित्यपि बोध्यम् ॥

## लिङ्गनिरूपणम्

श्रुतिकल्पनानुकूलं शब्दगतमर्थगतञ्च सामर्थ्यं **लिङ्गम्** । यथोक्तम्—

**सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते ।**

तत्र "**बर्हिर्देवसदनं दामी**"त्यत्र शब्दगतं लिङ्गम् । तेन च—अनेन मन्त्रेण बर्हिर्लवनं प्रकाशयेदिति श्रुतिकल्पनाद्वारा बर्हिर्लवने मन्त्रो विनियुज्यते । "**स्रुवेणाऽवद्यति**", "**स्वधितिनाऽवद्यति**" "**हस्तेनाऽवद्यति**" इत्यादौ स्रुवादिरूपार्थगतं तत् । तच्च द्रवद्रव्यादिपदकल्पकम् । तेन स्रुवेण द्रवद्रव्यमाज्यपयःप्रभृतिकमवद्येत्, स्वधितिना संहतं मांसादिकमवद्येत्, हस्तेन कठिनं चरुपुरोडाशादिकमवद्येत् इति द्रवद्रव्यादिपदकल्पनाद्वारा तदवदाने स्रुवादीनां विनियोगः क्रियते ।

तच्च लिङ्गं द्विविधम्—सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षं, तन्निरपेक्षं चेति । तत्र येन विनाऽपि यस्य सिद्धिर्भवति तस्य सामान्यसम्बन्धबोधकप्रमाणसापेक्षता, यथा मन्त्राणाम् । तेषां हि अनुष्ठेयार्थस्मारकत्वं कर्मसु प्रयोजनमुक्तम् । तच्च स्मरणं मन्त्रं विना उपायान्तरेणाऽप्युपद्रष्टृवचनादिना भवितुमर्हतीति न लवनादिस्वरूपार्थत्वं तेषाम् । किन्तु अपूर्वसाधनीभूतार्थप्रकाशनार्थत्वम् । तच्चाऽपूर्वसाधनत्वं न सामर्थ्यमात्रादवगन्तुं शक्यते । तस्य यथाश्रुतार्थमात्रे पर्यवसानात् । किन्तु प्रकरणस्थानस-

माख्यानामन्यतमेनैव तद्बोधनीयमिति लिङ्गेन स्ववैयर्थ्यपरिहारार्थं तदपेक्ष्यते । तत्सहकृतेन लिङ्गेन श्रुतिकल्पनाद्वारा विनियोगः क्रियते—अनेन मन्त्रेण दर्शपूर्णमाससम्बन्ध्यपूर्वसाधनीभूतं बर्हिर्लवनं प्रकाशयेदिति । येन विना यन्न सम्भवति तत्र तन्निरपेक्षं केवललिङ्गादेव । यथा—अध्ययनसिद्धार्थज्ञानस्य क्रत्वनुष्ठानौपयिकत्वम् । क्रत्वनुष्ठानं हि ज्ञानैकसाध्यमध्ययनसिद्धार्थज्ञानमन्तरेणाऽशक्यमित्यर्थगतसामार्थ्यमालोच्य 'ज्ञात्वा कर्माणि कुर्वीत' इति श्रुतिकल्पनाद्वारा तस्य कर्मानुष्ठानाङ्गत्वं कल्प्यते ।

तच्च शब्दगतं लिङ्गं मुख्य एवाऽर्थे विनियोजकं, न गौणे । मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्र विनियोगकल्पनेनैव मन्त्राकाङ्क्षाशान्तेः गौणार्थपर्यन्तमनुधावने प्रयोजनाभावात् । अत एव "**बर्हिर्देवसदनं दामी**"ति मन्त्रो दर्शपूर्णमासप्रकरणाविशेषेऽपि तत्रत्यकुशच्छेदन एव लिङ्गाद्विनियुज्यते, न वेदिस्तरणार्थोलपनामकतृणविशेषच्छेदनेऽपि । उलपेषु बर्हिश्शब्दस्य गौणत्वात् । मन्त्रस्य मुख्यार्थकुशलवनेनैव शान्ताकाङ्क्षत्वात् । यत्र गौणार्थे विनियोजकं प्रमाणमस्ति तत्र मन्त्रो गौणेऽप्यर्थे विनियुज्यत एव । यथा—"**ऐन्द्र्या गार्हपत्यमुपतिष्ठते**" इत्यग्निहोत्रोपस्थानगतवचनेन इन्द्रदेवत्यायाः "**कदाचन स्तरीरसि**" इत्यृचः गार्हपत्याग्न्युपस्थानाङ्गत्वम् । मन्त्रगतेन्द्रपदस्य च गौण्या वृत्त्या गार्हपत्यप्रकाशकत्वं विधिबलादङ्गीक्रियते ।

## वाक्यनिरूपणम्

पदसमभिव्याहारो वाक्यम् । स चाऽङ्गत्वबोधकश्रुतिराहित्येनाऽङ्गाङ्गिभावयोग्यार्थबोधकपदयोरेकत्र सहोच्चारणम् । तच्च लिङ्गश्रुती कल्पयित्वा विनियोजकम् । यथा '**खादिरो यूपो भवती**'ति । अत्र न

---

१ खादिरः 'खैर' इति हिन्दीभाषायां,, 'करुङ्गालि' इति च द्राविडभाषायां प्रसिद्धो वृक्षविशेषः ।

कर्मत्वादिबोधकं द्वितीयादिकं श्रूयते। केवलं यूपखादिरत्वयोस्सहोच्चारणमात्रम्। तेन च यूपसम्पादनसामर्थ्यरूपं लिङ्गं, खादिरत्वेन यूपं भावयेदिति श्रुतिञ्च कल्पयित्वा विनियोगः क्रियते। तच्च खादिरत्वं न यूपस्वरूपार्थम्। खादिरत्वेन विनाऽपि वृक्षान्तरेण यूपस्वरूपस्य निष्पादयितुं शक्यत्वेन स्वरूपे आनर्थक्यप्रसक्तेः। न च यूपाहवनीयादेरदृष्टरूपत्वेन अदृष्टस्य च प्रकारान्तरेणोत्पत्तौ प्रमाणाभावेन स्वरूपार्थत्वेऽपि नाऽऽनर्थक्यमिति वाच्यम्। यूपस्य केवलादृष्टरूपत्वाभावात्। तस्य च तद्रूपत्वे खदिरालाभे प्रतिनिध्युपादानं शास्त्रकाराभिमतं न सङ्गच्छेत। अपि तु दृष्टादृष्टसंस्कारगणविशिष्टकाष्ठस्यैव यूपपदार्थत्वम्[1]। तस्य च दृष्टरूपत्वेन तत्स्वरूपे आनर्थक्यप्रसक्तौ, तेन चाऽपूर्वं लक्षयित्वा तदुद्देशेन खादिरत्वविधानं युज्यत एव—खादिरत्वेन पशुनियोजनद्वारा प्रकृतापूर्वसाधनं भावयेदिति। पशुनियोजनद्वारेत्यवश्यं वक्तव्यम्। अन्यथा जुह्वादिष्वपि खादिरत्वमापद्येत। न चेष्टापत्तिः। तथात्वे यूपग्रहणवैयर्थ्यापत्तेः॥

## प्रकरणनिरूपणम्

सन्निहितयोः फलवदफलयोः कर्मणोः परस्परमुपकार्योपकारकाकाङ्क्षा प्रकरणम्। यथा दर्शपूर्णमासयोः प्रयाजादीनाञ्च। तत्र हि **'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'** इत्यत्र स्वर्गार्थं विहितयोर्दर्शपूर्णमासयोरस्त्युपकारकाकाङ्क्षा—स्वर्गसम्पादने मदुपकारकं किमिति। इयमेव कथम्भावाकाङ्क्षेत्युच्यते। आभ्यां स्वर्गं सम्पादयेदित्युक्तौ कथमित्या-

---

१ दृष्टादृष्टसंस्कारगणो यूप इति पार्थसारथिप्रभृतयः, See शास्त्रदीपिका P. L. छेदनप्रोक्षणादिजन्यदृष्टादृष्टरूपास्संस्काराः काष्ठे वर्तमाना यूपशब्दाभिधेयाः। तावत्संस्कारविशिष्टं काष्ठमिति खण्डदेवः. See भाट्टदीपिका P. 267. L. 8. Vol. II. सकलसंस्कारजन्यपरमापूर्वविशिष्टकाष्ठस्यैव यूपपदार्थत्वात्।

काङ्क्षोदयात्। कथंभावाकाङ्क्षा, इत्थम्भावाकाङ्क्षा, इतिकर्त्तव्यताकाङ्क्षा, उपकारकाकाङ्क्षा, अनुग्राहकाङ्क्षा, इति पर्यायाः। एवं **"समिधो यजती**'त्यत्र समिद्यागेन भावयेत् 'किम्' इत्यस्त्युपकार्याकाङ्क्षा। एवं परस्परसाकाङ्क्षयोः प्रयाजदर्शपूर्णमासवाक्ययोरेकवाक्यतां कल्पयित्वा प्रयाजादेर्दर्शपूर्णमासोपकारजननसामर्थ्यरूपं लिङ्गञ्च प्रकल्प्य 'प्रयाजादिभिर्दर्शपूर्णमासावुपकुर्यात्' इति श्रुतिञ्च कल्पयित्वा विनियोगः क्रियते। अत उभयाकाङ्क्षारूपप्रकरणादेव प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्।

तदिदं प्रकरणं क्रियाया एव विनियोजकं, न द्रव्यगुणादेस्सिद्धस्य वस्तुनः। तथाहि—*पार्थसारथिमिश्रमते*[१] तावत् धात्वर्थानुकूलव्यापारसामान्यस्यैवाऽर्थीभावनात्वात् तद्विशेषाकाङ्क्षैवेतिकर्त्तव्यताकाङ्क्षा। व्यापरविशेषश्च व्यापार एव भवितुमर्हति। यथा—वृक्षविशेषः शिंशपा वृक्ष एव, ब्राह्मणविशेषः परिव्राजको ब्राह्मण एव। व्यापारश्च क्रियारूप एवेति क्रियाया एवेतिकर्त्तव्यतात्वं सिद्धम्। *नवीनमते*[२] तु—यत्नात्मिकाया भावनाया अनुग्राहकाकाङ्क्षा इतिकर्त्तव्यताकाङ्क्षा। अनुग्राहकोऽपि व्यापार एव, न सिद्धं वस्तु। लोके व्यापारस्यैवाऽनुग्राहकत्वदर्शनात्। लोके हि कुठारेण च्छिन्द्यादित्युक्ते कथमित्याकाङ्क्षायामुद्यमननिपातनरूपव्यापार एव तथाऽन्वेति, न सिद्धरूपं हस्तादि। तस्य तु क्रियाद्वारेणाऽन्वयः। तेन द्रव्यदेवतादीनां यागसम्पादनादिरूपक्रियाद्वारेणैव प्रकरणाद् ग्रहणमिति तेष्वितिकर्त्तव्यताव्यवहारो गौणः, न तु वस्तुतः। कर्त्तव्यताया इति प्रकारविशेषः, इतिकर्त्तव्यता, इति हि तद्व्युत्पत्तिः। कर्त्तव्यविशेषः कर्त्तव्य एव भवति। तेन क्रियाया एव प्रकरणेन ग्रहणम्। तत्राऽप्यारादुपकार-

---

१ See शा॰ दी॰ P. 237 L. 1. and so on इतिशब्दः प्रकारवचन इत्यादि।

२ See भा॰ दी॰ P. 438 L. 1. L. J. Press edn. अस्मन्मते तु यत्नस्यैव भावनात्वादित्यादि।

करूपाया एव प्रयाजादिक्रियायाः, यस्याः श्रुतिलिङ्गवाक्यैर्न संयोगः। सन्निपत्योपकारकरूपायास्तु अवघातप्रोक्षणादिक्रियायाः श्रुतिलिङ्गवाक्यैस्त्रिभिरेव विनियोगान्न प्रकरणविनियोज्यता। अतस्सिद्धं प्रकरणं क्रियाया एव विनियोजकम्, द्रव्यगुणयोस्तु क्रियाद्वारा विनियोजकमिति। तदुक्तम्—

द्रव्याणां वाक्यसंयुक्तक्रियानिर्वर्तनाद्विना।
न प्रयोजनमन्यत्स्यात् कथंभावाद्यसङ्गतेः॥ इति।

तच्च द्विविधम्—महाप्रकरणमवान्तरप्रकरणञ्चेति। तत्र फलभावनायाः प्रकरणं **महाप्रकरणम्**। यथा—"**दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते**"ति स्वर्गरूपफलोद्देशेन विहिताया भावनाया दर्शाद्यवच्छिन्नायाः प्रकरणम्। तच्च स्वप्रकरणपठितानां प्रयाजानूयाजादीनामङ्गानां ग्राहकम्। तच्च प्रकृतावेव सम्भवति, न विकृतौ। यत्र स्वापेक्षितसर्वाङ्गाण्याम्नातानि सा **प्रकृतिः**। तथा हि—वेदे कर्माणि चतुःप्रकाराणि विधीयन्ते केवलप्रकृतिः, केवलविकृतिः, प्रकृतिविकृत्युभयरूपम्, अनुभयरूपञ्चेति। यत्रोपदेशेनैव दृष्टादृष्टार्थयावत्पदार्थविधिः सा **केवलप्रकृतिः**। यथा—दर्शपूर्णमासादिः, सर्वे च दर्विहोमाः। यत्राऽतिदेशेनैव तादृशाङ्गसम्बन्धः सा **केवलविकृतिः**। यथा—काश्चन काम्या इष्टयः।

यत्तु स्वप्रकृतेर्धर्मान् गृह्णाति, कासांचिद्विकृतीनां धर्मसमर्पकत्वेन प्रकृतिरपि भवति **तदुभयरूपं कर्म**। यथा—अग्नीषोमीयः पशुयागः। स हि पशुप्रभवद्रव्यत्वसादृश्येन सान्नाय्यप्रकृतिकः तत एव कुम्भीशाखादीन्यङ्गानि गृह्णाति। उपाकरणनियोजनादिरूपपाशुकाङ्गानि तु तत्रैव विहितानि पश्वन्तरेष्वतिदेशेन गच्छन्तीति तद्विषये इतरेषां पशुयागानामयं प्रकृतिरपि भवति। अतस्तदुभयरूपम्। **अनुभयरूपन्तु** गृहमेधीयेष्टिः। चातुर्मास्यान्तर्गते साकमेधाख्ये तृतीये पर्वणि "**मरुद्भ्यो गृहमेधिभ्यस्सर्वासां दुग्धे सायमोदनम्**" इति विहिता गृहमेधीयनामकेष्टिः।

तत्र इतिकर्त्तव्यताकाङ्क्षायां "**आज्यभागौ यजति**" "**स्विष्टकृतं यजति**" इत्यादिक्लृप्तोपकारककतिपयप्राकृताङ्गानां विधानात् तैरेव चाकाङ्क्षोपशमान्नाऽतिरिक्ताङ्गग्रहणं तस्याः। अत एव गृहमेधीयेष्टिरपूर्वेत्युच्यते। नास्ति पूर्वा प्रकृतिरिति तदर्थः। एवञ्चाऽत्राऽतिदेशाभावान्नाऽस्या विकृतित्वम्। उपदेशेनाऽपि न यावदपेक्षिताङ्गानां प्राप्तिः। आज्यभागाद्यङ्गभूतद्रव्यदेवतासंस्काराणां, दार्शपौर्णमासिकानामग्निवेदिबर्हिस्संस्काराणामन्वाधानखननलवनादीनां, जुह्वादिपात्राणां, तत्साधनपर्णतादीनां, सम्मार्गादितत्संस्काराणामङ्गप्रधानसाधारणानामाज्यभागवशेनैव गृहमेधीयेऽनुष्ठातव्यत्वात्। अतो नास्य प्रकृतिरूपत्वमित्यनुभयरूपता। अपूर्वत्वं क्वचित् प्रकृतिशब्दप्रयोगश्च साक्षाद्धर्मग्रहणाभावमादायेति द्रष्टव्यम्।

**नन्वेवं** गृहमेधीयस्याऽनुभयरूपत्वे तस्य प्रकृतित्वव्यावृत्त्या अनारभ्याधीतायाः प्रकृतिगामिन्याः पर्णतायास्तत्र प्राप्त्यनापत्तिरिति चेत्—न; आज्यभागार्थं जुह्वा अप्यावश्यकतया इतरधर्माणामिव पर्णताया अपि तदङ्गत्वेन प्राप्त्युपपत्तेः। प्रकृते च केवलप्रकृतिर्विवक्षिता। तत्रैवोभयाकाङ्क्षायास्सत्वात्। प्रकृतेर्ह्यस्ति कथंभावाकाङ्क्षा। अङ्गानामप्यस्ति साध्याकाङ्क्षा—किं भावयेदिति। अतस्तेषां परस्परसम्बन्ध उभयाकाङ्क्षया भवति। विकृतौ तु न तथा। "**सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम**" इति हि सौर्यवाक्ये दृष्टे औषधद्रव्यकत्वनिर्वापवत्वादिसादृश्येन प्राकृतमाग्नेयवाक्यमुपमीयते। गवयदर्शनाद्गोरुपमानवत्। एतदर्थमेव हि मीमांसकानामुपमानाङ्गीकरणमिति पूर्वमुक्तम्। तच्चाऽपेक्षितांशग्रहणार्थमेव। तत्र साध्यकरणांशयोर्विकृतिवाक्ये सत्वात् तावुज्झित्वा इतिकर्त्तव्यतांशग्रहण एव मतिः प्रवर्त्तते। तदपि चोपकारपृष्ठभावेन। विकृतेर्हि फलसम्पादनार्थं प्रथमत उपकारापेक्षा। तत्पृष्ठभावेन च तज्जनकपदार्थानामाकाङ्क्षा, न पदार्थमात्रस्य। प्रकृतौ पदार्थानामुपकारजनकत्वस्य पूर्वमक्लृप्तत्वात् क्लृप्तोपकारकग्रहणासम्भवेन पदार्थमात्रं गृहीत्वैव पश्चादु-

पकारकल्पनम् । विकृतौ तु क्लृप्तोपकारकपदार्थलाभे तत्परित्यागायोगात् तेषामेव ग्रहणम् । एवञ्च सौर्यादिष्वितिकर्त्तव्यताकाङ्क्षायामुपमितिलक्षणप्रमाणोपस्थितागनेयादितोऽङ्गानि प्रयाजादीनि प्रथममतिदिश्यन्ते क्लृप्तोपकारकत्वात् । प्रथमगृहीतैरेव च प्राकृताङ्गैर्विकृत्याकाङ्क्षा शाम्यति । ये त्वपूर्वा धर्मा विकृतिसन्निधौ पठिता उपहोमादयः तेषां विकृतेराकाङ्क्षामुत्थाप्यैव ग्रहणमित्युभयाकाङ्क्षायास्त्वतोऽभावान्न प्रकरणविनियोगः ।

न च वैकृताङ्गानां विकृतौ प्रकरणाभावेऽपि प्राकृताङ्गानां विकृत्या ग्रहणं प्रकरणेन स्यादिति वाच्यम् । तेषामपि प्रकृतावुपकारसम्पादनेन कृतार्थानामाकाङ्क्षाशान्तेराकाङ्क्षां पुनरुत्थाप्यैव विकृतिसम्बन्धकल्पनात् । अतश्च सिद्धं विकृतावुभयाकाङ्क्षालक्षणं प्रकरणं न सम्भवतीति । परन्तु विकृतावपि प्राकृताङ्गानुवादेन यद्विधीयते प्राकृताङ्गस्थाने तत् प्रकरणादेव गृह्यते । तथाहि—

विकृतिभावना तावत् स्वस्याः फलजनकत्वनिर्वाहायोपकारमपेक्षमाणा तत्सम्पत्तये क्लृप्तोपकारान् प्राकृतान् पदार्थानाकाङ्क्षति । तदर्थमुत्थिताऽऽकाङ्क्षा प्राकृतचरमपदार्थान्वयं यावदनुवर्त्तते । तत्र प्राकृते वेदिस्तरणादिकार्ये आगते तत्पृष्ठभावेन यावत् कुशा आयान्ति ततः पूर्वमेव शरा विधीयन्त इति शराणामकृतकार्याणां साकाङ्क्षाणामुभयाकाङ्क्षालक्षणप्रकरणेनैव ग्रहणम् ।

एवं **"पृषदाज्येनाऽनूयाजान् यजति"** इति पशुचातुर्मास्यादिषु विकृतिषु प्राकृताज्यस्थाने विधीयमानं पृषदाज्यमपि वैकृत्यामाकाङ्क्षायामनुवर्त्तमानायामेव विधीयत इति तस्याऽपि प्रकरणग्राह्यत्वमभिप्रयन्ति न्यायसुधाकाराः[१] । पार्थसारथिमिश्रास्तु[२]—न पृषदाज्यं नाम द्रव्यान्तरं यदाज्य-

१. See न्यायसुधा P. 1309. L. 22 and Do. on. पृषदाज्येनानूयाजान् इत्यादि ।

२. See शा० दी० P. 716 L. 17. तेन प्राकृतस्यैवाऽऽज्यस्य हविषश्चित्रतागुणमात्रविधानम् ।

स्थानापन्नं विधीयेत। प्राकृत एवाऽऽज्ये दधिमिश्रणरूपं पृषत्त्वं विधीयते। तच्च न कस्याऽपि स्थानापन्नमिति न प्रकरणग्राह्यत्वं तस्येति वदन्ति।

"आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इति विहिता आमनहोमा अपि प्राकृताङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले पठिता इत्यभ्युपगम्य तत्र प्राकृताङ्गग्रहणार्थमुत्थितायां वैकृत्यामाकाङ्क्षायामनिवृत्तायामेव विधानात् तेषां प्रकरणग्राह्यत्वमेवेति *न्यायप्रकाशकारादयो* वदन्ति[1], तदस्माभिर्न्यायप्रकाशव्याख्यायामेव **सारविवेचिन्यां** खण्डितमिति तत एवाऽवगन्तव्यम्।

## अवान्तरप्रकरणनिरूपणम्

फलभावनामध्यपतिताया अङ्गभावनाया यत्प्रकरणं तदवान्तरप्रकरणम्। तच्चाऽभिक्रमणादीनां प्रयाजाद्यङ्गत्वबोधकम्। तच्च सन्दंशेन ज्ञायते। **सन्दंशो** नाम—एकाङ्गानुवादेन पूर्वोत्तरं विधीमानयोरङ्गयोरन्तरालपठितत्वम्। अभिक्रमणं हि—"**अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतमि**"ति वाक्येन प्रयाजत्रयकरणानन्तरं चतुर्थप्रयाजं प्रति उपभृद्गतस्याऽऽज्यस्य जुह्वां समानयनं विधायाऽनन्तरं विधीयते—"**अभिक्रामं जुहोती**"ति। अभिक्राममिति णमुलन्तम्। अभिक्रम्याऽभिक्रम्य प्रतिप्रयाजं किञ्चित्किञ्चिदाहवनीयसमीपदेशं प्रति गत्वेत्यर्थः। अनन्तरञ्च "**प्रयाजानिष्ट्वा हवींष्यभिघारयती**"ति प्रयाजशेषेण हविरभिघारणं श्रुतम्। अतः प्रयाजाङ्गमध्ये पतितमभिक्रमणं प्रयाजाङ्गसन्दष्टत्वात् तदङ्गमेव भवति, तेषामेवोपस्थितत्वात्। उक्तं हि *वार्तिके*—

**परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।**
**ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते॥** इति।

---

१. See न्यायप्र० P. 55 L. 1 and सारविवेचिनी in the same page.

## स्थाननिरूपणम्

देशसामान्यं **स्थानम्** । समानदेशत्वमित्यर्थः । तद्द्विविधम्—पाठतोऽनुष्ठानाच्च । आद्यं द्विविधम्—यथासङ्ख्यपाठस्सन्निधिपाठश्चेति । तत्राऽऽद्येन—काम्येष्टिकाण्डे "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" "ऐन्द्राग्नमेकादशकपालं निर्वपेत्स्पर्धमानः" इति विहितानामिष्टीनां "उभा वामिन्द्राग्नी" "इन्द्राग्नी नवतिं पुरः" इत्यादीनि याज्यापुरोनुवाक्यायुगलानि प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्यादिक्रमेणाऽङ्गत्वं भजन्ते । द्वितीयेन तु—"अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादिवाक्यविहितासु नक्षत्रेष्टिषु[1] "सोऽत्र जुहोति—अग्नये स्वाहा कृत्तिकाभ्यस्स्वाहा" "प्रजापतये स्वाहा रोहिण्यै स्वाहा" इत्यादिवाक्यविहितानामुपहोमानामङ्गत्वम् ।

**ज्योतिष्टोमे** चतुर्थे औपवसथ्येऽह्नि अनुष्ठेयैः कर्मभिस्सह पश्वङ्गान्युपाकरणनियोजनादीन्याम्नातानि । सोमक्रयविधिसन्निधौ त्वग्नीषोमीयपशुयागो विहितः "यो दीक्षितो यदग्नीषोमीयं पशुमालभत" इति । स च "स एष द्विदैवत्यः पशुरग्नीषोमीय औपसथ्येऽह्न्यालब्धव्यः"[2] इति वचनाच्चतुर्थेऽहन्यनुष्ठीयते । अतस्तत्राऽनुष्ठीयमानाः पशुधर्मा उपाकरणादयोऽप्यनुष्ठानसादेश्यात्तदङ्गानि भवन्ति । एवञ्चोपहोमोपाकरणादीनामपूर्वाङ्गाणां फलाकाङ्क्षासत्वात् प्राकृताङ्गैर्निराकाङ्क्षाणामपि विकृतीनां कथम्भावाकाङ्क्षोत्थापनपूर्वकमुभयाकाङ्क्षां प्रकल्प्य ततस्तेषां विकृतिविध्येकवाक्यतारूपं वाक्यं फलवदुपकाररूपं सामर्थ्यम्, एभिरङ्गैर्नक्षत्रेष्ट्युपकारं पशुयागोपकारं च भावयेदिति श्रुतिश्च परिकल्प्य विनियोगः क्रियत इति सिद्धं स्थानादुपहोमपशुधर्मादीनां नक्षत्रेष्टिदैक्षाद्यङ्गत्वम् ।

---

१. कृत्तिकादिनक्षत्रदेवताकत्वादासां नक्षत्रेष्टिरिति व्यवहारः ।

२. एकदीक्षापक्षे प्रथमदिने दीक्षा । ततस्त्रिषु दिवसेषूपसदः । तत्रैवान्तिमोपसदह्नि चतुर्थदिनेऽग्नीषोमीयपशुयागः ।

## समाख्यानिरूपणम्

**समाख्या** यौगिकश्शब्दः। सा द्विविधा लौकिकी वैदिकी चेति। तत्र लौकिकी–आध्वर्यवम्, हौत्रम्, औद्गात्रम्, इत्यादिका यज्ञिकैः कल्पिता। तया तत्तत्काण्डपठितेष्वङ्गेषु तत्तत्कर्तृत्वेनाऽध्वर्य्वादयो विनियुज्यन्ते। वैदिकी तु होतृ[1]चमसः मैत्रावरुणचमस इत्यादिका। तया च होत्रादीनां तत्तच्चमसभक्षणाङ्गत्वेन विनियोगः। तदेवं निरूपितानि सङ्क्षेपतश्श्रुत्यादीनि षट् प्रमाणानि।

## श्रुत्यादीनां प्राबल्यदौर्बल्यनिरूपणम्

तानि च विनियोगविधिमुपकुर्वन्ति। तेषां विनियोगार्थमेकत्र प्रवृत्तौ पूर्वपूर्वापेक्षयोत्तरोत्तरस्य दौर्बल्यम्। एवञ्च श्रुतिलिङ्गयोर्विरोधे श्रुतिः प्रबला, लिङ्गं दुर्बलम्। लिङ्गवाक्ययोर्विरोधे लिङ्गं प्रबलं, वाक्यं दुर्बलमित्यादि ज्ञेयम्। श्रुतिर्हि स्वतो विनियोजिका। लिङ्गादीनि तु स्वस्वपूर्वप्रमाणकल्पनाद्वारैव विनियोजकानि। एवञ्च लिङ्गं स्वपूर्वप्रमाणकल्पनया यावद्विनियोक्तुमारभते ततः पूर्वमेव श्रुतिः प्रवृत्ता सती पदार्थं विनियुङ्क्ते। तावतैवाऽऽकाङ्क्षायाश्शान्तत्वेन कल्पकाभावाल्लिङ्गं स्वयमेव विरमति। एवं वाक्यं यदा स्वपूर्वं प्रमाणं लिङ्गं ततः श्रुतिञ्च कल्पयित्वा विनियोगाय प्रवर्त्तते ततः पूर्वं लिङ्गं केवलं श्रुतिमात्रं कल्पयित्वा विनियोजकं भवतीति ततः कल्पकाभावाद्वाक्यं स्वयमेव विरमति। एवमेत्र प्रकरणादिष्वपि द्रष्टव्यम्।

**एतदुक्तं भवति**–यावदुत्तरं प्रमाणं स्वकार्याय प्रक्रमते तावदेव पूर्वं प्रमाणं प्रवृत्तं स्वपूर्वप्रमाणकल्पनया तत्कार्यं सम्पादयतीत्युत्तरप्रमाणस्य मन्थरप्रवृत्तस्य शीघ्रप्रवृत्तेन पूर्वप्रमाणेन विषयस्याऽपहारादुत्तरप्रमाणस्य प्रवृत्तिरेव निरुध्यते। यथोक्तं *वार्त्तिके*–

---

१. होतृचमस इत्यादीनां वेद एव श्रुतत्वाद्वैदिकत्वम्।

एकमेव फलं प्राप्तुमुभावारोहतो यदा ।
एकस्सोपानवर्त्मैको भूमिष्ठश्चाऽपरस्तयोः ॥
उभयोस्तु जवस्तुल्यः प्रतिबन्धश्च नाऽन्तरा ।
विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयोः ॥
प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा ॥ इति ॥

## श्रुत्यादीनां बाध्यबाधकभावः

सोऽयं पूर्वेणोत्तरस्य बाधोऽप्राप्तबाधः। उत्तरस्य प्रमाणस्याऽप्राप्तावेव बाधात्। प्राप्तबाधस्तु दशमाध्यायगोचरः, तमुत्तरत्र निरूपयिष्यामः। तत्र *श्रुत्या लिङ्गस्य बाधो* यथा—"**ऐन्द्र्या गार्हपत्यमुपतिष्ठते**" "**वारुणीभिरादित्यमुपतिष्ठते**" इत्यादौ। तत्र हि इन्द्रादिप्रकाशनरूपं मन्त्रगतं लिङ्गं बाधित्वा 'ऐन्द्र्या' 'वारुणीभिरि'त्यादि तृतीयाश्रुत्या गार्हपत्यवरुणाद्युपस्थानाङ्गत्वेन मन्त्रो विनियुज्यते। बाधप्रकारस्तु पूर्वोक्तदिशा ज्ञेयः। *लिङ्गेन वाक्यबाधो* यथा—"**स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्सीदाऽमृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः**" इति मन्त्रे तस्मिन्नित्युत्तरार्द्धगतस्य तच्छब्दस्य पूर्वार्द्धसाकाङ्क्षत्वात्तेन सहैकवाक्यता प्रतीयते। तद्बलादेकस्मिन्नर्थे सदने सादने वा मन्त्रो विनियोगं प्राप्नोति। तद्बाधित्वा लिङ्गात्पूर्वार्द्धस्य सदनकरणे उत्तरार्द्धस्य सादने च विनियोगः क्रियत एकवाक्यतां भङ्क्त्वाऽपि। तत्प्रकाशकत्वात्तयोः। बाधकारणन्तु विनियोगे विप्रकर्षः पूर्ववद्द्रष्टव्यः।

*वाक्येन प्रकरणबाधो* यथा—दर्शपूर्णमासप्रकरणे हौत्रकाण्डे प्रस्तरप्रहरणाङ्गभूतसूक्तवाकानुवाकमध्यपठितो मन्त्रः "**इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्**" इत्यत्र। तत्र हीन्द्राग्नीपदं लिङ्गादिन्द्राग्निदेवताके यागे दर्शकालिकेऽङ्गं भवति। तदेकवाक्यत्वाच्च 'इदं हवि'रित्यादिरपि दर्शमात्राङ्गम्। न तु दर्शपूर्णमासप्रकरणे पठितोऽयं

मन्त्र इति कृत्वा प्रकरणाद्दर्शपूर्णमासोभयाङ्गम्। प्रकरणस्य वाक्यादित्रयकल्पनाद्वारा विनियोजकस्य लिङ्गश्रुतिकल्पनाद्वारा विनियोजकाद्वाक्याद्दौर्बल्यात्।

*प्रकरणेन स्थानबाधे*—राजसूयान्तर्गताभिषेचनीयाख्यसोमयागसन्निधिपठिता विदेवनादय उदाहरणम्। तथाहि—अस्ति राजसूयो **"राजा राजसूयेन स्वाराज्यकामो यजेत"** इति। स चेष्टिपशुसोमयागात्मकः। तत्र षट् सोमयागाः—पवित्रः, अभिषेचनीयः, दशपेयः, केशवपनीयो, व्युष्टिद्विरात्रः, क्षत्रस्यधृतिश्चेति। तत्राऽभिषेचनीयाख्यस्य सोमयागस्य सन्निधौ **"अक्षैर्दीव्यति" "राजन्यं जिनाति" "शौनश्शेपमाख्यापयते"** इत्यादिभिर्विदेवनादयो विहिताः। **विदेवनं** द्यूतक्रीडा। **शौन**[१]-

१. शुनश्शेपोपाख्यानं श्रीमदप्पय्यदीक्षितैर्वेदान्तकल्पतरुपरिमले स्फुटतरं वर्णितमैतरेयब्राह्मणगतम्। तदित्थम्—'हरिश्चन्द्रस्य राज्ञश्शतं जाया बभूवुः। तासु पुत्रमलभमानः स्वगृहे वसन्तं नारदं पुत्रप्रयोजनं पप्रच्छ। स पुत्रवतः प्रशंसया तद्रहितस्य निन्दया च पुत्रलाभमतितरां प्रशस्य 'जातेन पुत्रेण वरुणं यक्ष्ये' इति संकल्पे कृते तव पुत्रो भवितेत्युवाच। हरिश्चन्द्रस्तथेति संकल्प्य रोहितं नाम पुत्रं लेभे। तदैव वरुणेन 'मामनेन यजस्वे'ति पृष्टो दन्तोत्पत्त्यनन्तरमिति, तदनन्तरं पृष्टो दन्तपतनान्तरमिति, ततः पृष्टो द्वितीयदन्तोत्पत्त्यनन्तरमिति, तदनु पृष्टः कवचधरे जाते इति च तावत्पर्यन्तं कालं पशुभावानर्हतोद्भावनेन क्षपयामास। कवचधरं कुमारं दृष्ट्वा मामनेन यजस्वेति वरुणेन पृष्टे कुमारो धनुर्गृहीत्वा वनं प्रतस्थे। हरिश्चन्द्रो वरुणगृहीतो जलोदरव्याधियुक्तो जज्ञे। रोहितस्संवत्सरं वने चरित्वा प्रत्यागतः संचारे फलं प्रदर्शयतेन्द्रेणोपदिष्टः पुनरपि संवत्सरं वने चरित्वा प्रत्याजगाम। एवं पुनरिन्द्रस्योपदेशात् षड्वारानेकैकं संवत्सरं वनं चचार। षष्ठे पर्याये पुत्रवन्तमजीगर्तनामानमृषिं वने दृष्ट्वा तमेकं पुत्रं ययाचे हरिश्चन्द्रेण कर्तव्ये वरुणयज्ञे पशुत्वेन नियुज्य स्वात्मनिष्क्रयार्थम्। तदा पिता ज्येष्ठं माता कनिष्ठपुत्रं च दातुं नाऽन्वमन्यत। अर्थान्मध्यमः शुनःशेपो देयः पर्यवसितः। तं गृहीत्वा समागत्य वरुणं यष्टुं पुत्रो ददौ। पिता च हरिश्चन्द्रो राजसूयं प्रारभ्याभिषेचनीये शुनःशेपं पशुं संकल्पयामास। अजीगर्तः पुनः शतं गृहीत्वा तं विशसितुमुद्युक्तः। तस्मिन्विशसितु-

**श्शेपाख्यान**मैतरेयब्राह्मण आम्नातम् । **राजन्यजयः** प्रसिद्धः । एतेषामभिषेचनीयसन्निधौ पठितानामपि सन्निधिं बाधित्वा प्रकरणाद्राजसूयाङ्गत्वमेव । विनियोगे प्रकरणादिचतुष्टयकल्पकत्वेन प्रकरणात्स्थानस्य विप्रकर्षात् ।

**ननु** न राजासूयस्य प्रकरणं भवितुमर्हति । स त्विष्टिपशुसोमयागात्मक इति हि पूर्वमुक्तम् । तत्र इष्टीनां स्वप्रकृतितो दर्शपूर्णमासाभ्यां, पशूनां स्वप्रकृतितोऽग्नीषोमीयात्पशुयागात्, सोमयागानां स्वप्रकृतिभूतादग्निष्टोमसंस्थाकज्योतिष्टोमाच्चाऽतिदेशेनाऽङ्गानां प्राप्तेस्तैरेव तेषां नैराकाङ्क्ष्यादुभयाकाङ्क्षाया अभावादिति चेत्—सत्यम्, तथाऽपि राजसूयत्वधर्मपुरस्कारेण तत्र कानिचनाऽङ्गान्युत्पवनादीनि विहितानि "**राजसूयाय हैना उत्पुनाति**" इत्यादिना । तेषान्तु राजसूयत्वधर्मपुरस्कारेणैव ग्रहणं वक्तव्यम् । तदर्थमुत्थिताया आकाङ्क्षाया अनुवृत्तौ सत्यामेव विदेवनादीनामङ्गानां विधानादुभयाकाक्षासत्वेन प्रकरणविनियोगो नाऽसुलभः । यथोक्तं *वार्त्तिके*—

**अविच्छिन्ने कथम्भावे यत्प्रधानस्य पठ्यते ।**
**अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गता ॥** इति ।

*स्थानेन समाख्याबाधो* यथा—दर्शपूर्णमासयोः पौरोडाशिके काण्डे सान्नाय्यसम्बन्धिपदार्थविधिक्रमे, '**शुन्धध्वं दैव्याय कर्मणे देवयज्यायै**', इति श्रुतो मन्त्रः क्रमात्सान्नाय्यपात्रप्रोक्षणाङ्गम् । न तु समाख्यातः पौरोडाशिकपात्रप्रोक्षणाङ्गम् । एवं श्रुत्योः, लिङ्गयोः, वाक्ययोः, प्रकरणयोः, स्थानयोः, समाख्ययोः, श्रुतिवाक्ययोः, श्रुतिप्रकरणयोः, श्रुतिस्थानयोः, श्रुतिसमाख्ययोः, लिङ्गप्रकरणयोः लिङ्गस्थानयोः, लिङ्ग-

मुद्युक्ते शुनःशेपो वरुणं तुष्टाव । वरुणस्य प्रीत्या पाशाद्विमुक्तस्तत्र यज्ञे होतारं विश्वामित्रं प्राप्य तस्य पुत्रो बभूवेति । आचार्येर्हरिश्चन्द्रेण कर्तुं प्रारब्धो राजसूय एव पुरुषपशुकत्वेन पुरुषमेध उपचरितः" इति ।

समाख्ययोः, वाक्यस्थानयोः, वाक्यसमाख्ययोः, प्रकरणसमाख्ययोश्च बाध्यबाधकभावेषूदाहरणान्यस्मत्कृतसारविवेचिन्यां न्यायप्रकाशव्याख्यायां द्रष्टव्यानि॥[१]

## अङ्गानां द्वैविध्यम्

एवं विनियोगविधेस्सहकारिभूतानि श्रुत्यादीनि षट् प्रमाणानि तेषां परस्परमेकान्तरितद्व्यन्तरितादिविरोधे बलाबलञ्च सोदाहरणानि निरूपितानि। एतत्सहकृतेन विनियोगविधिना यान्यङ्गानि विनियुज्यन्ते तानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति। तत्र सिद्धरूपाणि जातिद्रव्यगुणादीनि। क्रियारूपाण्यपि द्विविधानि-सन्निपत्योपकारकाण्यारादुपकारकाणि चेति। कर्माङ्गभूतद्रव्यदेवतादिकमुद्दिश्य तत्संस्कारकत्वेन विधीयमानानि **सन्निपत्योपकारकाणि**। सन्निपत्य द्रव्यादिषु सम्बध्य यान्युपकुर्वन्ति तानि तथोच्यन्ते। तानि प्रोक्षणनिर्वापावघातपेषणविलापनसम्मार्जनपर्यग्निकरणतक्षणाष्टाश्रिकरणप्रभृतीनि। तत्र निर्वापावघातपेषणादीनि दृष्टप्रयोजनकानि। प्रोक्षणसम्मार्गपर्यग्निकरणादीन्यदृष्टार्थानि। एतानि द्रव्यदेवतादौ कञ्चनाऽतिशयविशेषमाधाय तद्द्वारा यागीयापूर्वे उपयुज्यन्ते। एतेषां गुणकर्मत्वमेव। कर्माङ्गद्रव्यदेवतादिसंस्कारकत्वात्संस्कार्याणां द्रव्यादीनां प्राधान्यम्। कर्मणां गुणत्वम्। **"यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्रप्रतीयेत तस्य द्रव्यप्रधानत्वात्"** इति सूत्रोक्तं गुणकर्मलक्षणम्। दृष्टादृष्टोभयार्थमपि किञ्चित्कर्म। यथा—पशुपुरोडाशस्विष्टकृद्वाजिनयागादि। पशुपुरोडाशो नाम पशुयागाङ्गभूतो वपायागानन्तरं हृदयाद्यङ्गयागात्पूर्वं क्रियमाणः पशुदेवतोद्देश्यकः पुरोडाशद्रव्यको यागः। स च वपायागे उद्दिष्टां हृदयादियागे उद्देक्ष्यमाणां देवतां स्मारणेन संस्करोति। अतो देवताविषये स दृष्टार्थः। द्रव्यत्यागस्याऽदृष्टार्थत्वात्तद्विषयेऽदृष्टार्थः। एवं

---

१. See न्यायप्र० P. 80 L. 4 and so on.

स्विष्टकृद्यागोऽपि प्रधानयागोपयुक्तं द्रव्यं प्रक्षेपांशेन संस्करोति। मन्त्रेण प्रधानयागीयां देवतामिति तदंशे दृष्टार्थः। त्यागांशे त्वदृष्टार्थः। एवं वाजिनादावपि द्रष्टव्यम्।

एतच्च सन्निपत्योपकारकाख्यं कर्म द्विविधम्—उपयुक्तसंस्कारकमुपयोक्ष्यमाणसंस्कारकमिति। अवघातप्रोक्षणादिकमुपयोक्ष्यमाणसंस्कारकम्। यागे उपयोक्ष्यमाणानां व्रीह्यादीनां संस्काररूपत्वात्। स्विष्टकृदिडाभक्षणप्रस्तरप्रहरणादिकमुपयुक्तसंस्कारकम्। यागे उपयुक्तानां द्रव्यादीनां तैस्संस्कारात्। इडाशब्देन तन्नाम्नी काचिद्देवतोच्यते शक्त्या। तत्सम्बन्धाद्यागोपयोगशिष्टं चरुपुरोडाशादिकं द्रव्यमपीडाशब्देनोच्यते लक्षणया। तस्य भक्षणमृत्विग्भिः क्रियमाण**मिडाभक्षणम्**। **प्रस्तरो** मुष्टिपरिमिता दर्भा वेद्यां हविरासादनार्थमास्तृताः कुशाहरणकाले प्रथमं लूनाः। तेषां स्वकार्यसमाप्त्यनन्तरमाहवनीये प्रक्षेपः **प्रस्तरप्रहरणम्**। इदमुपयुक्तसंस्कारकं कर्म प्रतिपत्तिकर्मेत्युच्यते। उपयुक्तस्य आकीर्णकरस्य विहितदेशे प्रक्षेपः प्रतिपत्तिः।

द्रव्यादिकमनुद्दिश्य साक्षादेव तत्तत्कर्माङ्गत्वेन विधीयमानं कर्म **आरादुपकारकम्**। **आरात्** द्रव्यादिकमद्वारीकृत्य साक्षादेवेति यावत्। यथा प्रयाजानूयाजाज्यभागादिकम्। तद्धि यागीयद्रव्यादिभिरसम्बद्धमेव विहितं प्रकरणेन गृहीतम्। तत्सर्वमदृष्टार्थमेवाऽङ्गम्। तैर्ह्यनुष्ठितैरङ्गापूर्वाण्युत्पद्यन्ते। तैश्च यजमानात्मन्यवस्थितैः परमापूर्वोत्पत्तावुपकारः क्रियत इत्युक्तम्। अत्र कर्मणः प्राधान्यं द्रव्यस्य गुणत्वम्। यथोक्तं सूत्रकारेण—**"यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्"** इति।

तदिदमारादुपकारकं सन्निपत्योपकारकाद्दुर्बलम्। सन्निपत्योपकारकस्थले हि शेषशेषिणोस्सम्बन्धो वाक्यकृतः। आरादुपकारकस्थले तु स कल्प्यः। एवं सन्निपत्योपकारकस्य श्रुत्यादित्रयविनियोज्यता। आरादुप-

कारकस्य तु प्रकरणादित्रयविनियोज्यत्वम् । अतश्च दृष्टार्थसन्निपत्योपकारकाणामारादुपकारकाणाञ्च दृष्टार्थत्वाददृष्टार्थत्वरूपं प्राबल्यदौर्बल्यकारणमस्त्येव । अदृष्टार्थसन्निपत्योपकारकाणामप्यारादुपकारकापेक्षयाऽस्त्येव प्राबल्यं विनियोजकप्रमाणनिबन्धनम् । "**स्थाणौ स्थाण्वाहुतिं जुहोति**" इति विहिताया यूपच्छेदनापादानभूते काष्ठे क्रियमाणायाः स्थाण्वाहुतेः स्थाणुसंस्कारद्वारा यूपसंस्कारकत्वं यूपसम्बद्धत्वात् । तत्र कृतस्संस्कारो यूप एवाऽतिशयमादधाति । इष्यत एव हि गुरुधारितायास्स्रजः पूजनादिना संस्कारश्शिष्यैः । अतस्स्थाण्वाहुतेस्संस्कारकर्मत्वमेव । न त्वारादुपकारकत्वमिति सिद्धान्तितं दशमे स्थाण्वधिकरणे । एवं संक्षेपेण निरूपितं द्विविधमप्यङ्गजातम् ।

तेषु द्विविधेष्वप्यङ्गेषु कानिचन तत्तत्क्रतुप्रकरण एव पठितानि । कानिचनाऽनारभ्याधीतानि । तत्र यानि प्राकरणिकानि तेषां यस्य प्रकरणे पाठस्तत्रैवोपयोगस्सति सम्भवे । असम्भवे तु यत्र सम्भवस्तत्रोत्कर्षः । यथा—पूषानुमन्त्रणमन्त्रस्य "**पूष्णोऽहं देवयज्यया प्रजनिषीय प्रजया पशुभिः**" इत्यस्य दर्शपूर्णमासप्रकरणे पठीतस्याऽपि तत्र पूषदेवताया अभावेनाऽनुपयोगात् यत्र पूषा देवता तत्रोत्कर्ष इत्युक्तं मन्त्रनिरूपणप्रस्तावे । इदं तु सिद्धरूपस्योदाहरणम् । क्रियारूपस्य तु "**तिस्र एव साह्नस्योपसदो द्वादशाऽहीनस्य**" इति ज्योतिष्टोमप्रकरणे श्रुतस्याऽहीनगतोपसद्द्वादशत्वस्य ज्योतिष्टोमेऽनुपयोगात् तत उत्कृष्टस्याऽहीने निवेशः क्रियते ।

ज्योतिष्टोमप्रकरणे सोमाभिषवाधारभूतयोरधिषवणफलकयोस्सन्तर्दनं '**न सन्तृणत्ति**' इत्यनेन निषिध्याऽनन्तरमेव '**अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै**' इति दीर्घसोमे सन्तर्दनं विहितम् । **सन्तर्दनं नाम**—द्वयोः फलकयोः संश्लेषदेशे तनूकरणेन एकस्योपर्यपरफलकमारोप्य संश्ले-

१. इदं च कठमैत्रायणीयशाखानुसारेण । तत्रैवाऽस्य मन्त्रस्याऽम्नानात् ।

षणम् । तस्य च दीर्घसोम एव विधानात् दीर्घश्चाऽसौ सोमश्चेति व्युत्पत्त्याऽनेकदिनरूपदीर्घकालव्यापिसोमयागवाचित्वावगमात्तत्राऽस्य वचनस्योत्कर्षः ।

एवमेव तत्तत्प्रकरणपठिता विधयो निषेधाश्च त्रिधा भिद्यन्ते—क्रत्वर्थाः, पुरुषार्थाः, क्रतुयुक्तपुरुषार्थाश्चेति । तत्र विधीनां **क्रत्वर्थत्वं** क्रतुसाद्गुण्यापादकक्रियाविषयकत्वम् । पुरुषाभिलषितफलजनकक्रियाविषयकत्वं **पुरुषार्थत्वम्** । क्रतुसम्बन्धिपुरुषगतयोग्यताजनकक्रियाविषयत्वं **क्रतुयुक्तपुरुषधर्मत्वम्** । प्रतिषेधानान्तु क्रतुवैगुण्यापादकक्रियाविषयकत्वं **क्रत्वर्थत्वम्** । पुरुषनिष्ठप्रत्यवायजनकक्रियाविषयत्वं **पुरुषार्थत्वम्** । क्रतुसम्बन्धिपुरुषगतायोग्यताधायकक्रियाविषयत्वं **क्रतुयुक्तपुरुषार्थत्वमिति** विवेकः । इमे च क्रत्वर्थत्वपुरुषार्थत्वे तार्तीयीके विधिनिषेधगते । चातुर्थिके तु ते विधिविषयनिषेधविषयपदार्थगते वेदितव्ये । तल्लक्षणे तु शास्त्रानधीनेष्टसाधनताज्ञानजन्येच्छाविषयवृत्त्युद्देश्यतानिरूपितविधेयताकत्वं पुरुषार्थत्वम् । तद्भिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वं क्रत्वर्थत्वमिति । **'न कलञ्जं भक्षयेत्'** इत्यादिपुरुषार्थनिषेधस्थले नरकाभावोद्देशेन निवृत्तिविधानात् **'न स्त्रियमुपेयात्'** इत्यादिक्रत्वर्थनिषेधस्थले च क्रतुवैगुण्यपरिहारोद्देशेनैव च निवृत्तिविधानाल्लक्षणसमन्वयः ।

## क्रत्वर्थपुरुषार्थस्वरूपम्

तत्र दर्शपूर्णमासप्रकरणे श्रुतानां **"नानृतं वदेत्" "न मांसमश्नीयात्" "न स्त्रियमुपेयात्"** इत्यादिनिषेधानां केवलक्रत्वर्थत्वम् । तेन क्रतुमध्येऽनृतवदनादिकरणे क्रतुर्विगुणस्स्यात्, न पुरुषः प्रत्यवेयात् । अत्र हि वदेदित्याख्यातश्रवणे कर्ता, कृतिः, संख्या, शाब्दी भावना, आर्थी भावना च प्रतीयन्त इत्यविवादम् । तत्राऽनेकार्थबोधकेषु पदेष्वेकत्र शक्तिः, अन्यस्याऽऽक्षेपादिना लाभ इत्यप्यविवादम् । कुत्र शक्तिः,

कस्याऽऽक्षेपलाभ इति जिज्ञासायां प्रधानेन गुणाक्षेपस्य दर्शनात्प्राधान्यं तावन्नियामकम्। तत्र **"भावप्रधानमाख्यात"**मिति निरुक्तस्मृत्या भावपदवाच्याया भावनायाः प्राधान्यमवगम्यते। तत्राऽपि णिजन्ताद्-भूधातोरच्प्रत्यये कृते निष्पन्नो भावशब्दः फलोत्पत्त्यनुकूलामार्थीभावना-मभिधत्ते, न तु शाब्दीम्। एवञ्चार्थीऽभावनाया एव प्राधान्यम्, न तु शाब्दयाः। तस्या भावशब्दवाच्यत्वाभावात्। न च–

**धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते।**

इति वचनबलाद्धात्वर्थस्यैव शुद्धस्य भावशब्दवाच्यत्वम्, न भावनाया इति वाच्यम्। अस्य व्याकरणमात्रविषयत्वेनाऽन्यत्राऽप्रसरात्। व्याकरणेऽपि न सर्वत्र, **"भावे त्वतला"** वित्यादौ तदप्रवृत्तेः। किन्तु **"नपुंसके भावे क्तः" "भावे घञ्"** इत्यादावेव। अतश्च पूर्वोदाहृत-निरुक्तस्मृत्या भावपदाभिधेयाया आर्थीभावनायाः प्राधान्येऽवगते तयैव कर्तुराक्षेपलाभान्न तत्र पृथक् शक्तिस्स्वीक्रियते, गौरवात्। सङ्ख्यादीनां तु तत्तद्धर्मपुरस्कारेण शक्त्यैव बोधः।

न च कर्तुराक्षेपलभ्यत्वे तस्याऽशाब्दत्वापत्त्या तत्राऽऽख्यातोपात्त-सङ्ख्याया अनन्वयापत्तिः, **'न हि शाब्दमशाब्देनाऽन्वेती'**ति न्याया-दिति वाच्यम्। आक्षेपलाभेऽपि लक्षणाया अप्यङ्गीकारात्। अतः कर्तुर-वाच्यत्वात् प्रकरणाच्छुद्धक्रतुधर्मत्वमेव निषेधस्य। यत्र सत्यपि प्रकरणपाठे कर्तुरप्युपादानं तत्र क्रतुयुक्तपुरुषधर्मत्वम्, यथा **"तस्माज्जञ्जभ्यमानोऽ-नुब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवाऽऽत्मन्धत्ते सर्वमायुरेति"** इति। अत्र 'जञ्जभ्यमान' इति शानच्प्रत्ययेन कर्तुरभिहितत्वाद्दर्शपूर्ण-मासप्रकरणपाठाच्च क्रतुयुक्तपुरुषधर्मत्वम्। प्राणापानावित्यस्य तु पर्णमयी-न्यायेनाऽर्थवादत्वम्।

अनारभ्य श्रुतस्य **"तस्मात्सुवर्णं हिरण्यं भार्यम्, दुर्वर्णोऽस्य-**

**भ्रातृव्यो भवति"** इति विहितस्य सुवर्णधारणस्य केवलपुरुषधर्मत्वम् । प्रकरणपाठाभावादव्यभिचरितक्रतुसम्बन्धाभावाच्च क्रत्वर्थत्वकल्पनायोगात् । अतस्सुवर्णधारणं केवलपुरुषार्थम् । तत्फलन्तु रात्रिसत्रन्यायेन शत्रुदुर्वर्णप्राप्तिरूपम् । एवमेव प्रयाजानुयाजादिविधीनां क्रत्वर्थत्वम्, **"न कलञ्जं भक्षयेत्"**दित्यादिनिषेधानाञ्च पुरुषार्थत्वं बोद्धव्यम् ।

एवं **"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति"** **"यस्य खादिरस्स्रुवो भवति छन्दसामेव रसेनाऽवद्यति सरसा अस्याऽऽहुतयो भवन्ति"** इत्यनारभ्याधीताः, पर्णमयीत्व, खादिरत्वादयोऽप्यव्यभिचरितक्रतुसम्बन्धात्क्रत्वर्था एव । ते हि जुह्वाद्युद्देशेन विधीयमाना जुह्वादीनां क्रत्वैकान्तत्वात्तदुपस्थापितक्रतावेव विनियुज्यमानाः क्रत्वर्था भवन्ति । एवञ्च जूहूद्देशेन विधीयमानाः पर्णताद्यो जुह्वादिस्वरूपे आनर्थक्यापत्तेस्तदाक्षिप्तं क्रतुं यावद्गताः तत्रापि तथात्वापातात् तदाक्षिप्तापूर्वपर्यन्तं गत्वा तत्र पर्यवस्यन्ति । तथा चाऽयमर्थः—अवत्तहविर्धारणद्वारा यदपूर्वसाधनीभूतं द्रव्यं तद्भावयेत् इति प्रथमस्य वाक्यस्य । हविरवदानद्वारा यदपूर्वसाधनं तद्भावयेदिति द्वितीयस्य ।

## अनारभ्याधीतन्यायः

एतेषाञ्च पर्णतादीनामनारभ्याधीतानां प्रकृतिमात्रगामित्वम्, न तु विकृतिगामिता । विकृतावपि गमने द्विरुक्ततापत्तेः। जुहूद्देशेन विधीयमाना पर्णता प्रकृतिं गच्छन्ती प्रकृतिवद्विकृतिः कर्त्तव्या, इत्यतिदेशशास्त्रेण जुह्वां विकृतावतिदिष्टायां तत्पृष्ठभावेन

**प्रधानं नीयमानं हि तत्राऽङ्गान्यपकर्षति ।**

इति न्यायेन विकृतावपि नीयेत, अनारभ्यवाक्येन यदि पुनरपि विधीयेत तदा द्विरुक्तत्वं भवेत् । किञ्च प्राप्तिकालवैषम्यमपि स्यात् । प्रकृतिभावनाया यावदङ्गग्रहणानन्तरमेव परिपूर्णता, ततश्चाऽतिदेश इति प्रथमं

प्रकृत्यर्थमनारभ्यविधिना पर्णता विधेया। ततो जुह्वामतिदेशेन विकृतौ प्राप्तायां पुनस्तत्राऽपि तेन पर्णता विधेयेति विधेः प्राप्तौ कालवैषम्यमपि भवति। अतो न पर्णतादेः प्रकृतिविकृत्युभयगामित्वम्। किन्तु प्रकृतिमात्रगामित्वमिति।

"सप्तदश सामिधेनीरनुब्रूया"दिति सामिधेन्यनुवचनोद्देशेन विहितस्य साप्तदश्यस्याऽनारभ्याधीतस्याऽपि न प्रकृतिगामित्वम्। प्रकृतेः "पञ्चदशाऽनुब्रूया"दिति विहितेन पाञ्चदश्येनाऽवरोधात्। किन्तु विकृतिष्वेव। तत्रापि न सर्वासु विकृतिषु। तथात्वे क्वचिद्विकृतिषु साप्तदश्यपुनःश्रवणवैयर्थ्यापत्तेः। अतो यत्र प्रत्यक्षतस्साप्तदश्यं श्रुतं मित्रविन्दाचातुर्मास्यादौ तत्रैव गच्छति। तत्राऽनारभ्याधीतवाक्यस्य तत्तद्विकृतिगतवाक्यैरुपसंहारः क्रियते। उपसंहारो नाम सामान्यप्राप्तस्य विशेषेऽवस्थापनम्। यथा "पुरोडाशं चतुर्धा करोती"ति पुरोडाशसामान्ये विहितस्य चतुर्धाकरणस्य "आग्नेयं चतुर्धा करोती"त्यनेनाऽग्नेयपुराडोशमात्र एव नियमनं क्रियते। यत्र केवलोऽग्निर्देवता तस्यैव च चतुर्धाकरणम्। न तु यत्राऽन्यसहितस्याऽग्नेर्देवतात्वं तत्राऽग्नीषोमीयैन्द्राग्नादौ। तदुक्तम्—

सामान्यविधिरस्पष्टस्संह्रियेत विशेषतः।
स्पष्टस्य तु विधेर्नैवमुपसंहार इष्यते॥ इति।

अतस्सिद्धमनारभ्याधीतानां प्रकृतिगामित्वम्, प्रकृतावनिविशमानानां तेषां विकृतिगामित्वम्, तत्र तूपसंहार इति। एवं श्रुत्यादिनिरूपणपूर्वकं निरूपितस्सङ्क्षेपेणाऽङ्गाङ्गिभावः॥

इति तन्त्रसिद्धान्तरत्नावल्यां द्वितीयपरिच्छेदेऽङ्गत्वादिनिरूपणं नाम द्वितीयः प्रकाशः॥



## प्रयोज्यत्वनिरूपणम्

अथेदानीं प्रयोज्यप्रयोजकभावो निरूप्यते । तत्र **प्रयोज्यत्वं** नाम परोद्देशप्रवृत्तकृतिव्याप्यत्वम् । अत्र व्याप्यत्वमनुष्ठाप्यत्वरूपम् । अतश्च कालादेरङ्गत्वसत्त्वेऽप्यनुष्ठाप्यत्वाभावान्न प्रयोज्यत्वम् । अङ्गत्वाच्च प्रयोज्यत्वस्य भेदः । तेन यदुद्देशप्रवृत्तकृतिव्याप्यत्वं यस्य तत्तस्य प्रयोज्यमिति विशिष्य लक्षणं फलितम् । अस्ति हीदं लक्षणं प्रयाजदध्यानयनादौ । दर्शपूर्णमासामिक्षोद्देशप्रवृत्तपुरुषकृतिव्याप्यत्वात्प्रयाजदध्यानयनादेः। यन्निष्ठकृतिव्याप्यतानिरूपितोद्देश्यताशालि यत् तत्तस्य प्रयोजकम् । यथा आमिक्षादर्शादिकं दध्यानयनप्रयाजादेः । **"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्"** इति श्रूयते । तत्र प्रथमवाक्येन तापविशिष्टस्य पयसो दध्यानयनरूपसंस्कारो विधीयते--तप्तं पयो दध्यानयनेन संस्कुर्यादिति । यद्यप्यत्र तापस्योद्देश्यविशेषणत्वादविवक्षा ग्रहैकत्वाधिकरणन्यायेन[1] प्राप्नोति तथाऽपि तापाभावे आमिक्षाया एवाऽनिष्पत्तेः हविरार्तिन्यायेनोद्देश्यमेव[2] स्वस्वरूपनिष्पत्त्यौपयिकं विशेषणमनुमन्यते। अतस्तापोऽपि विवक्षित एव । दृष्टश्च घनीभावः पयसस्संस्कारो दध्यानयनेन । द्वितीयवाक्ये तु पूर्वप्रकृतं पयस्तच्छब्देन परामृश्यते । तद्विश्वदेवदेवत्यमामिक्षापदवाच्यं चेति ज्ञायते । तेन पय एव घनीभूतमामिक्षा । एतदीययाज्यामन्त्रवर्णे **'जुषन्तां युज्यं पयः'** इत्यामिक्षायाः पयस्त्वेनैव व्यवहारात् । तदर्थमेव च दध्यानयनम् । तदनुनिष्पन्नं च वाजिनं द्रवद्रव्यरूपम् । तच्च तृतीयवाक्येन वाजिदेवताकयागाङ्गत्वेन विनियुज्यते। तच्च न दध्यानयनं प्रयुङ्क्ते, अनुनिष्पन्नत्वादेव । तेन वाजिननाशे न तदर्थं पुनर्दध्यानयनं कार्यम् ।

एवं **"पुरोडाशकपालेन तुषानुपवपति"** इति विहितस्तुषोपवापो

१. See पू. मी. ३. १. ७. for ग्रहैकत्वन्याय ।
२. See पू. मी. ६. ४. ६. for हविरार्त्तिन्याय ।

न कपालप्रयोजकः । "कपालेषु श्रपयति" इति विधिना कपालानां पुरोडाशश्रपणार्थत्वेन विधानात्पुरोडाशश्रपणस्यैव तत्प्रयोजकत्वात् । पुरोडाशकपालेनेति तत्प्रयुक्तस्यैव कपालस्य तुषोपवापार्थत्वेन विनियोगात् । अतो न तुषोपवापः कपालस्य प्रयोजकः । एवञ्च यत्र पुरोडाशो नाऽस्ति सौर्यादौ न तत्र तुषोपवापार्थं कपालोत्पादनम् । एवं सोमक्रयार्थं क्रयदेशं प्रति नीयमानामेकहायनीं प्रकृत्य "षट् पदान्यनुनिष्क्रामति, सप्तमे पदे जुहोति, तदध्वर्युरञ्जलिना गृह्णाति, यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाऽक्षमुपाञ्ज्यात्" इति विहितं सोमाधारभूतशकटाक्षाभ्यञ्जनं नैकहायन्यानयनप्रयोजकम् । तस्याः 'एकहायन्या क्रीणाती' ति सोमक्रयार्थत्वेनैव विनियोगात्, तदर्थाया एवैकहायन्याः सप्तमपदग्रहणस्याऽक्षाभ्यञ्जनार्थत्वेनाऽभिधानात् । तेन तत्पदपांसुलाभे न तदर्थं पुनरेकहायनीनयनं कार्यम् । किन्तु यैः कैश्चित् पांसुभिरक्षाभ्यञ्जनानुष्ठानमिति । एवं स्विष्टकृद्यागहविश्शेषभक्षणप्रस्तरप्रहरणादीनां सर्वेषां प्रतिपत्तिकर्मणां न स्वातन्त्र्येण हविराद्युत्पत्तिप्रयोजकता, प्रधानयागानुनिष्पन्नत्वादेषाम् । धारणप्रयोजकत्वं त्वस्त्येवेति दिक् ॥

प्रसङ्गाद्यागादिषु हविस्स्वरूपं निरूप्यते । यागहोमादीनां परस्परं भेदः पूर्वं निरूपितः । तत्र यागहोमस्थलयोः "सकृदुपस्तृणाति, द्विर्हविषोऽवद्यति, सकृदभिघारयति, चतुरवत्तं जुहोति" इति चतुरवदानसंस्कृतस्यैव द्रव्यस्याऽऽहवनीयादिप्रक्षेपात्मकहोमविधानात् तत्समकाले किञ्चिदव्यवहिततःपूर्वकाले वा क्रियमाणं त्यागात्मकयागं प्रति तस्यैवाऽवत्तस्य द्रव्यस्य हविष्ट्वम् । त्यक्तस्यैव च प्रक्षेपेण संस्कारः । अतो द्व्यवदानस्य त्यागसाधनत्वादवशिष्टस्य पुरोडाशादेस्स्विष्टकृदादिस्संस्कार इति *शबरस्वामिनः* । *वार्तिककारास्तु* कृत्स्नस्यैव पुरोडाशस्याऽवदानात्पूर्वमेव देवतायै त्यागः । त्यक्तस्यैव पुरोडाशस्यांऽशतः प्रक्षेपेण स्विष्टकृद्यागेन शेषभक्षणेन च

प्रतिपत्तिः । वचनबलादेव च प्रधानयागे त्यक्तस्याऽपि पुनःस्वीकारेण स्विष्टकृदादौ त्यागः । अतश्शेषकार्याणामनुनिष्पन्नत्वान्न तेषां स्वातन्त्र्येण हविःप्रयोजकतेति वदन्ति । एवं निरूपितस्संक्षेपेण तुरीयाध्यायगोचरः प्रयोज्यप्रयोजकभावः ॥

*इति प्रयोज्यत्वनिरूपणम् ।*



## प्रयोगविधिनिरूपणम्

अतः परं पञ्चमाध्यायगोचरः क्रमो निरूपणीयः । तदर्थं प्रयोगविधिर्निरूप्यते । प्रयोगप्राशुभावबोधको विधिः **प्रयोगविधिः** । प्रयोगो नामाऽनुष्ठानम्, तत्प्राशुभावः पदार्थान्तराव्यवधानरूपं शैघ्र्यम्, तद्बोधको विधिरित्यर्थः । स च "**समिधो यजति**" इत्यादिभिरङ्गविधिभिरेकवाक्यतामापन्नः प्रधानविधिरेव । स हि साङ्गप्रधानभावनायाः फलोद्देशेनाऽनुष्ठानमेकेन वाक्येन बोधयन्नेकवाक्योपादानबलादङ्गप्रधानयोस्साहित्यमप्यवबोधयति । तच्च साहित्यमसति बाधके एकक्षणवृत्तीति कल्प्यते । अनेकेषां प्रधानानामङ्गानाञ्चैकक्षणेऽनुष्ठानं तत्तत्क्रतुषु परिगणितैर्ऋत्विग्भिरसम्भवदोषग्रस्तमितिपदार्थान्तराव्यवधानरूपेऽविलम्बे तत्पर्यवस्यति । स चाऽविलम्बो नियते क्रमे कस्मिंश्चिदाश्रीयमाणे सिद्ध्यति । अतः प्रयोगविधिरेव स्वसिद्ध्यर्थं स्वविधेयपदार्थविशेषणतया नियतं कञ्चित्क्रममपि विधत्ते ।

तत्र **क्रमो** नामाऽऽनन्तर्यम् । तच्च एकप्रतियोगिकमेकवृत्ति । यथा "**वेदं कृत्वा वेदिं करोति**" इत्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदिकरणनिष्ठम् । तत्र च सहकारीणि प्रमाणानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि षट् ॥

## श्रुतिक्रमनिरूपणम्

तत्र **श्रुतिर्नाम** वृत्या क्रमबोधकः क्लृप्तश्शब्दः। सः अथततः-क्त्वाल्यबादिरूपः। तत्र अथततश्शब्दयोरानन्तर्यवाचित्वं शक्त्यैव। क्त्वा-प्रत्ययादीनां तु पूर्वकालत्वादिवाचिनामपेक्षावशात्क्रमबोधकत्वं लक्षणया। अर्थादिव्यावृत्त्यर्थं लक्षणे क्लृप्त इति। तेषु कल्पितस्यैव शब्दस्य क्रमबोधकत्वात्। सा च श्रुतिर्द्विविधा—केवलक्रमपरा तद्विशिष्टपदार्थपरा चेति। **'वेदं कृत्वा वेदिं करोति'** इति केवलक्रमपरा। वेदकरणस्य वेदिकरणस्य च वचनान्तरेण प्राप्तत्वात्तदनुवादेन क्त्वाप्रत्ययेन क्रममात्रविधानात्।

**"वषट्कर्त्तुः प्रथमभक्ष"** इति क्रमविशिष्टपदार्थपरा। वचनान्तरेण होतुर्भक्षणप्राप्तावप्येकेन पदेन तदनुवादेन प्राथम्यरूपक्रममात्रविधाने एकप्रसरताभङ्गापत्तेः। एकस्य हि पदस्य समस्तस्य व्यस्तस्य वाऽर्थेन उद्देश्यभूतेन विधेयभूतेन वा एकरूपेण भाव्यम्। उद्देश्यविधेययोः पूर्वप्राप्ताप्राप्तरूपयोः परस्परविरुद्धयोरेकार्थबोधकैकपदप्रतिपाद्यत्वासम्भवात्। अतोऽत्र प्राथम्यविशिष्टो भक्षो वषट्कारनिमित्तः समाख्यादिनिमित्ताद्भक्षाद्भिन्नो विधीयते। अतश्च तत्र प्राथम्यरूपक्रमविशिष्टपदार्थविधिः। एवं **"आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति"** इत्यत्राऽपि ग्रहणे दशमत्वरूपः केवलक्रम एव विधीयते, न तु ग्रहणमपि। **"आश्विनं गृह्णाति, ग्रहैर्जुहोति"** इति ग्रहणहोमयोः प्राप्तत्वात्॥

## अर्थक्रमनिरूपणम्

अर्थः प्रयोजनं तदनुरोधेन यः क्रमस्स **आर्थक्रमः**। यथा **"अग्निहोत्रं जुहोति, यवागूं पचति"** इति। लोके तु भुञ्जीत पचेदिति। अत्र चरमश्रुतस्याऽपि पाकस्य प्रयोजनानुसारेण पूर्वं करणम्। पश्चादग्निहोत्राद्यनुष्ठानम्। इतरथा अग्निहोत्रानन्तरं यवागूपाके क्रियमाणे तस्य दृष्टप्रयोजनालाभाददृष्टार्थतैव स्यात्। अत्र क्रमबोधकश्रुतशब्दाभावेऽप्यर्थानुरोधात्स कल्प्यते। अत एव श्रौतक्रमापेक्षयाऽयं दुर्बलः॥

## पाठक्रमनिरूपणम्

मन्त्रपाठेन ब्राह्मणवाक्यपाठेन वाऽनुष्ठेयपदार्थेषु यः क्रमः कल्प्यते स **पाठक्रमः**। तत्र **"समिधो अग्न आज्यस्य व्यन्तु", "तनूनपादग्न आज्यस्य वेतु"**, इत्यादिमन्त्रपाठक्रमात्प्रयाजेषु क्रम आश्रीयते। न च प्रयाजेषु विधायकानां ब्राह्मणवाक्यानामपि सत्वात्तेषां क्रमनियामकत्वं कुतो न स्यादिति वाच्यम्। तेषां प्रयोगाद्बहिरेव स्वार्थं विधाय कृतार्थत्वेनाऽनुष्ठानकालसम्बन्धाभावात्। पदार्थैर्हि स्वानुष्ठानकाल एव क्रमोऽपेक्ष्यते। तदानीं मन्त्रा एवाऽर्थस्मरणार्थमुच्चार्यन्त इति तेषामेव सन्निहितत्वेनोपस्थितत्वात्क्रमबोधकत्वं युक्तम्, न ब्राह्मणवाक्यानाम्। अत एव मन्त्रपाठो ब्राह्मणपाठाद्बलवानिति तयोर्विरोधे मन्त्रपाठक्रममनुसृत्यैवाऽनुष्ठानम्। यथा—पौर्णमास्यामाग्नेयाग्नीषोमीययोः। तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयानुवाकेऽग्नीषोमीयः पुरोडाशयागो विहितः **"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्"** इति। तत्रैव च षष्ठप्रपाठके पञ्चमानुवाक आग्नेययागो विहितः **"यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाऽच्युतो भवति"** इति। तद्दर्शनाऽग्नीषोमीयस्य प्रथममनुष्ठानं तत आग्नेयस्य भवितुं युक्तम्, तथापि मन्त्रपाठस्य तद्विपरीत्यात्तस्य च प्राबल्यात्तदनुसारेणाऽऽदावाग्नेयस्यैवाऽनुष्ठानं ततोऽग्नीषोमीयस्येति कल्प्यते। यत्र तु मन्त्रपाठो नाऽस्ति तत्राऽगत्या ब्राह्मणपाठस्यैव क्रमबोधकत्वं स्वीक्रियते॥

## स्थानक्रमनिरूपणम्

स्थानेन यः क्रमः स **स्थानक्रमः**। स्थानं नाम अनेकेषु पदार्थेषु प्रकृतौ विभिन्नकालिकेष्वतिदेशतो विकृतिं गतेषु तत्र तेषां वचनबलादेककालानुष्ठाने प्राप्ते यस्य प्रथमोपस्थितिस्तस्यैव प्रथममनुष्ठानम् इति यः क्रमः **स स्थानक्रमः**। तद्यथा—साद्यस्क्रो नाम साङ्ग एकदिनसाध्यस्सो-

व्ययागविशेषः। तत्र दीक्षणीयाद्यवभृथान्तास्सर्वे पदार्था एकस्मिन्नेवाऽहन्यनुष्ठेयाः। तत्राऽग्नीषोमीयसवनीयानुबन्ध्यरूपास्त्रयोऽपि पशुयागाः **"सह पशूनालभत"** इत्यनेनैककालानुष्ठेयतया विहिताः। तच्चाऽनुष्ठानं सवनीयस्थान एव। तदैव च त्रयाणां पशुयागानां स्थानातिक्रमसाम्यं भवति। अग्नीषोमीयस्स्वस्थानादुत्कृष्य सवनीयदेशं प्रति नीयते। आनुबन्ध्योऽपि स्वस्थानादपकृष्य सवनीयदेशं प्राप्यते। अतश्चोभयोस्स्वस्थानातिक्रमस्समो भवति। एवञ्च सवनीयदेशे त्रयाणां पशूनामनुष्ठाने प्राप्ते तत्र सवनीयस्यैव प्रथमोपस्थितत्वेन तस्यैव प्रथममनुष्ठानम्। सवनीयपूर्वतने पदार्थेऽनुष्ठिते सवनीयस्यैवोपस्थितेः। प्रकृतौ हि ज्योतिष्टोमे **"आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति"** इत्याश्विनग्रहग्रहणोत्तरं सवनीयपशूपाकरणं विहितम्। एवञ्चाऽऽश्विनग्रहणस्योपस्थापकस्य सत्वात्तदुपस्थापितस्य सवनीयस्यैव प्रथममुपाकरणम्, न त्वग्नीषोमीयस्य; तदुपस्थापकस्य भ्रष्टत्वेन स्थानाभावात्। आनुबन्ध्यस्याऽप्युपस्थापकप्रमाणस्याऽनागतत्वेन तदभावात्। अतस्सवनीयस्यैव प्रथममुपाकरणम्। अनन्तरमग्नीषोमीयस्य, तत आनुबन्ध्यस्य, प्रकृतिदृष्टक्रमत्वात्। यद्यपि प्रकृतौ तयोर्भिन्नकालत्वात् पौर्वापर्यमर्थसिद्धं, नाऽतिदेशमर्हति तथाऽपि सन्देहेऽणुरपि विशेषोऽध्यवसायकरो भवतीति न्यायेन प्रकृतिदृष्टस्यैव क्रमस्य नियामकत्वमङ्गीक्रियते। एवञ्च त्रिष्वपि पशूपाकरणस्य स्थानात्क्रमः। नियोजनादीनान्तु प्रवृत्त्या क्रम इति द्रष्टव्यम्॥

## मुख्यक्रमनिरूपणम्

प्रधानानुष्ठानक्रमेण यत्राऽङ्गानामप्यनुष्ठाने क्रम आश्रीयते स मुख्यक्रमः। यथा आग्नेयाग्नीषोमीययोः पौर्वापर्यक्रमेण तदीयनिर्वापयोस्तदीयपुरोडाशश्रपणादौ च पौर्वापर्यमाश्रीयते—प्रथममाग्नेयस्य निर्वापादिः ततोऽग्नीषोमीयस्येति। तदैव प्रधानयोरस्वाङ्गैस्सह तुल्यं व्यवधानं स्यात्। इतर-

थाऽनुष्ठाने आग्नेययागतदङ्गयोरव्यवधानम्, अग्नीषोमीययागतदङ्गयोरधिकव्यवधानं च स्यात् । तदयुक्तम्, प्रयोगविधिबोधितसाहित्यबाधापत्तेः ॥

## प्रवृत्तिक्रमनिरूपणम्

प्रधानानामनेकेषां सहाऽनुष्ठाने कर्तव्ये सन्निपत्योपकारकाणां तदीयद्रव्यादौ क्रियमाणानां 'प्रतिप्रधानं गुणावृत्ति' रिति न्यायेनाऽऽवृत्त्याऽनुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थेन यः क्रमः स प्रवृत्तिक्रमः । यथा—साद्यस्क एव सवनीयाग्नीषोमीयानुबन्ध्यपशुषु स्थानप्रमाणेनोपाकरणे क्रमशः कृते येन क्रमेण तेषूपाकरणमनुष्ठितं तेनैव क्रमेण नियोजनपर्यग्निकरणादीनामनुष्ठानम् । प्रयोगविधिना हि एकपदोपादानादेककालानुष्ठेयत्वरूपं साहित्यमवबोधितम । तच्च साहित्यमेकेन कर्त्रा तावत्पदार्थानां युगपदनुष्ठानासम्भवादशक्यसम्पादनमिति प्रयोगविधिरेव प्रधानत्रयानुरोधेन क्षणत्रयव्यवधानं सहते, नाऽधिकम् । अतश्च द्वितीयादिपदार्थानां नियोजनादीनामनियमेन यस्मिन् कस्मिंश्चित्क्रम आश्रीयमाणे केषाञ्चित् स्वप्रधानेन सहाऽत्यन्तव्यवधानं, केषाञ्चिदव्यवधानञ्च स्यात् । तच्चाऽयुक्तम् । प्रयोगविध्यवगतसाहित्यबाधापत्तेः । एवमेव "**सप्तदशप्राजापत्यान् पशूनालभते**" इत्यादावपि पश्वङ्गभूतानां नियोजनपर्यग्निकरणादीनां क्रमोऽवगन्तव्यः । प्रवृत्तिः प्रथमाङ्गानुष्ठानम्, तत्क्रमेण द्वितीयाद्यङ्गानुष्ठाने यः क्रमः स प्रवृत्तिक्रम इत्यर्थः । तदेवं निरूपितस्सङ्क्षेपेण श्रुत्यादिषट्प्रमाणकः क्रमः ।

तत्राऽनेकप्रधानैकप्रयोगस्थले तत्सन्निपातिनामङ्गानां प्रतिप्रधानं गुणावृत्तिरिति न्यायेनाऽऽवृत्त्याऽनुष्ठानं प्राप्तम् । तत्र च प्रकारद्वयम्—**काण्डानुसमयः पदार्थानुसमयश्चेति** । एकस्मिन् प्रधाने सन्निपत्योपकारकाङ्गकाण्डं समग्रमनुष्ठायाऽपरस्मिन् प्रधाने तदनुष्ठानमिति **काण्डानुसमयः** । काण्डः पदार्थवर्गः, तेनाऽनुसमयः, अनुष्ठानमिति यावत् ।

एवमेकं पदार्थं सर्वेष्वपि प्रधानेष्वनुष्ठाय, ततः पदार्थान्तरस्य पूर्वक्रमेणाऽनुष्ठानं **पदार्थानुसमयः**। तत्र प्रधानानामङ्गानां च प्रत्यासत्तिलाभाय प्रायेण पदार्थानुसमय एवाऽऽश्रीयते। यत्र तु पदार्थानुसमये कृते प्रधानविरोधः तत्र तावन्मात्राणामङ्गानां काण्डानुसमयः। यथा—अश्वप्रतिग्रहेष्टौ **"यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेत्"** इत्यनेन यावत्तावच्छब्दाभ्यां दानसमसङ्ख्याकेष्टिविधानात् तावतीनामिष्टीनामेकप्रयोगसाध्यत्वेन तावत्सु पुरोडाशेष्वेकदा श्रप्यमाणेषु यदि पदार्थानुसमयेन सर्वेषां पुरोडाशानामधिश्रयणं कृत्वोद्वासनं क्रियेत, ततस्ते दह्येरन्। अतस्तत्राऽधिश्रयणाद्युद्वासनान्तमेकत्र कृत्वाऽपरत्र तत्कर्तव्यमिति तत्र काण्डानुसमयः।

एवं पश्वेकादशिन्यामनेकयूपपक्षे यूपधर्माणामञ्जनादिपरिव्याणान्तानां काण्डानुसमय एव। **"अञ्जनादिपरिव्याणान्तं यजमानो यूपं नाऽवसृजेत्"** इति विहितस्य यजमानकर्तृकस्पर्शस्य पदार्थानुसमये बाधात्। अयमेव क्रमस्स्मार्तेष्वपि पदार्थेषु बोध्यः॥

## श्रुत्यादीनां प्राबल्यदौर्बल्यनिरूपणम्

अत्राऽपि श्रुतिलिङ्गादिवत्पूर्वपूर्वं प्रबलमुत्तरोत्तरं दुर्बलम्। तत्र पाठाच्छ्रुतिः प्रबला। अत एवाऽऽश्विनग्रहस्य तृतीयस्थाने ग्रहणं पाठप्राप्तं **"आश्विनो दशमो गृह्यते"** इति श्रुत्या बाध्यते। एवं पाठादर्थः प्रबलः। तेन **"अग्निहोत्रं जुहोति, यवागूं पचति"** इत्यत्र पाठं बाधित्वा प्रयोजनानुसारेण पूर्वं पाकः पश्चादग्निहोत्रानुष्ठानम्। पाठेऽपि ब्राह्मणपाठापेक्षया मन्त्रपाठस्य प्राबल्यम्। तदुदाहरणं पूर्वमेव निरूपितम्। पाठक्रमेण मुख्यक्रमस्य बाधः। मुख्यक्रमो हि प्रधानक्रमानुरोधेन कल्प्यः। पाठस्तु प्रत्यक्ष एवेति पाठक्रमः क्लृप्तत्वात्प्रबलः। अत एव पौर्णमास्यां क्रमेणाऽनुष्ठीयमानानामाग्नेयोपांशुयाजाग्नीषोमीयाणामङ्गभूतो हविर्निर्वापो न

मुख्यक्रमानुरोधेनाऽनुष्ठीयते । किन्तु पाठक्रमात्प्रथममाग्नेयाग्नीषोमीयहविर्निर्वापः, तत उपांशुयाजाङ्गभूताज्यहविर्निर्वापश्च क्रियते । एवं मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधः । उदाहरणं तु मृग्यम् । बाधकारणं तु प्रधानप्रत्यासत्त्यनुग्रहो मुख्यक्रमे । प्रवृत्तिक्रमे त्वङ्गानां प्रत्यासत्तिः । अङ्गप्रत्यासत्त्यपेक्षया प्रधानप्रत्यासत्तेः प्राबल्यात्तेन तस्य बाधः । एवं चतुर्थपञ्चमाध्यायगोचरः प्रयोगविधिस्सपरिकरस्सङ्क्षेपेण निरूपितः ॥

**इति तन्त्रसिद्धान्तरत्नावल्यां द्वितीयपरिच्छेदे प्रयोगविधिनिरूपणं नाम तृतीयः प्रकाशः ॥**

## अधिकारविधिनिरूपणम्

एवमनुष्ठेयपदार्थवर्गे सक्रमके निरूपिते कोऽत्राऽधिकरोतीत्यधिकारिविशेषापेक्षायां षष्ठाध्यायगोचरोऽधिकारविधिर्निरूप्यते । यत्तु अधिकारविधिनिरूपणं प्रयोगविधिनिरूपणात्पूर्वमेव कैश्चित्कृतं तन्न युक्तम् । क्रमविशिष्टानुष्ठेयपदार्थज्ञानानन्तरमेवाऽधिकारिजिज्ञासोदयात् । उक्तं हि *न्यायरत्नमालायाम्*—

**निरूपिते ह्यनुष्ठेये शक्यं शक्तिनिरूपणम् ।**
**तस्यां निरूपितायां तु तदधीनाऽधिकारधीः ॥** इति ।

तं कर्मजन्यफलभोक्तृत्वसमानाधिकरणकर्तृत्वरूपमधिकारं यो बोधयति सोऽधिकारविधिः । अधि उपरि करोतीत्यधिकारः, तद्बोधको विधिरधिकारविधिः । प्रवृत्तिप्रयोजकीभूतफलेच्छाफलान्यतरसमानाधिकरणकर्तृत्वमधिकार इति निष्कृष्टलक्षणं बोध्यम् । तेन नित्यस्थले अकरणे प्रत्यवायभियैव प्रवृत्त्युदयात् प्रवृत्तिप्रयोजकफलेच्छाया अभावेऽपि पापक्षयरूपफलसत्त्वेन तत्समानाधिकरणकर्तृत्वस्य सत्त्वान्नाऽव्याप्तिः । अत्र कर्तृत्वमध्वर्य्वादिषु ऋत्विक्षु विद्यतेऽनधिकारिष्वित्युक्तं फलभो-

क्तृत्वेति । फलभोक्तृत्वमकर्तृषु वर्तते पितृष्वित्युक्तं कर्तृत्वमिति । स चाऽधिकारविधिः "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिः । आग्नेयादिवाक्यैर्ह्युत्पन्नयोर्दर्शपूर्णमासाख्यसमुदाययोरनेन स्वर्गाख्यफलभोक्तृत्वरूपं फलस्वाम्यमवबोध्यते । अत्र हि 'यजेत' इत्याख्यातेनाऽऽर्थी भावनाऽभिधीयते । स्वर्गकामपदं च लक्षणया स्वर्गं प्रथमा कर्मत्वं चाऽभिधत्तः । तथा च दर्शपूर्णमासाभ्यां यागसमुदायाभ्यां स्वर्गं भावयेदिति निष्पन्नो वाक्यार्थः । एवं ज्योतिष्टोमादिवाक्येष्वपि बोध्यम् । अत्र यद्यपि **"एकैकस्मै कामायाऽन्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ," "एकैकस्मै कामायाऽन्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः"** इति वाक्याभ्यां दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च सर्वफलार्थत्वावगमात् पुनर्दर्शपूर्णमासज्योतिष्टोमवाक्याभ्यां फलसम्बन्धबोधनं व्यर्थम्, तथाऽपि वाक्यानर्थक्यभयान्नियमोऽङ्गीक्रियते—अनेनैव स्वर्गफलसम्बन्धमवबुध्य कर्मानुष्ठाने स्वर्गसिद्धिर्नाऽन्यथेति ।

स चाऽधिकारो न फलकामनावत्पुरुषमात्रस्य । किन्तु अधिकारिविशेषणविशिष्टस्यैव, अधिकारिविशेषणञ्च स्वाध्यायाध्ययनसम्पादिताक्षरग्रहणविशिष्टं तत्तत्क्रतुविषयकमर्थज्ञानम्, आधानसिद्धाहवनीयाद्यग्निमत्त्वम्, तत्तत्कर्मानुष्ठानशक्तिश्च । अग्निहोत्राद्युत्तरक्रतवो हि ज्ञानसाध्या आहवनीयाद्यग्निसाध्याश्च न तान् विनाऽनुष्ठानाय कल्पन्ते । अतस्ते स्वसिध्यर्थं तानपेक्षन्ते । यदि परप्रयुक्ताग्निविद्योपजीवनेन कृतार्थास्तदा न ते तानाक्षिपन्ति । एवञ्चाऽऽधानसिद्धाग्निमन्तं पुरुषमादाय, एवमध्ययनसिद्धविद्यावन्तं पुरुषमादायैव च चारितार्थ्यसम्भवे स्वातन्त्र्येणाऽग्निविद्याक्षेपकत्वशक्तेरकल्पनात् । अत एव तदुभयाभावाच्छूद्रस्य न कर्मस्वधिकारः । अध्ययनं ह्युपनीताधिकारिकम् । उपनयनञ्च त्रैवर्णिकमात्रविषयकमिति शूद्रस्योपनयनाभावादनुपनीतस्य चाऽध्ययनाभावात्तत्सिद्धं ज्ञानं दुर्लभमेव ।

एवमाधानस्याऽपि त्रैवर्णिकमात्रविषयत्वेन तत्सम्पादिताऽग्निमत्तापि तस्य दुर्लभैवेति न शूद्रस्याऽग्निविद्यासाध्येषु वैदिककर्मस्वधिकारसिद्धिः ।

एवं सामर्थ्यमप्यधिकारिविशेषणम् । **"आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणी"**ति न्यायेन समर्थं प्रत्येव सर्वविधिप्रवृत्तेः । अत एव तिरश्चां कर्माधिकारो नाऽस्ति, पूर्वोक्तत्रितयाभावात् । देवानामपि कर्मसु नाऽधिकारः, विग्रहाद्यभावात् । श्रुतिषु तत्र तत्र **'देवा वै सत्रमासत'** **'देवा वै यज्ञं तन्वाना'** इत्यादि यज्ञानुष्ठातृत्वश्रवणं, तत् तेषु तेषु कर्मसु पुरुषाणां रुच्युत्पादनार्थमर्थवादमात्रम् ।

एवं मनुष्याणामपि विकलाङ्गानां नाऽधिकारः, तेषां यथावत्कर्मानुष्ठानासम्भवात् । अन्धस्याऽऽज्यावेक्षणासम्भवात्, मूकस्य मन्त्रोच्चारणाशक्तेः, पङ्गोर्विष्णुक्रमणेऽसामार्थ्यात्, बधिरस्य मन्त्रादिश्रवणाभावात् । अतोऽन्धादीनामप्रतिसमाधेयाङ्गानां कर्मस्वधिकारो नाऽस्त्येव । प्रतिसमाधेयाङ्गानां तु प्रतिसमाधानानन्तरमधिकारः । तत्र काम्यकर्मसु सकलाङ्गकरणसमर्थस्यैवाऽधिकारः । विधिर्हि साङ्गस्यैव कर्मणः फलसाधनत्वं बोधयति । तत्र यदि कानि चनाऽङ्गानि नाऽनुष्ठीयेरन् तदा कर्मणो वैकल्यापातात् विकलात्कर्मणोऽपि फलोत्पत्तावङ्गाम्नानवैयर्थ्यापातात् काम्ये कर्मणि सर्वाङ्गानुष्ठानमावश्यकम् । नित्ये तु अङ्गकरणासमर्थस्य प्राधानमात्रकरणसमर्थस्याऽप्यधिकारोऽस्ति । नित्यनैमित्तिकयोर्हि **"यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत"** इत्यादिषु 'णमुल्' प्रत्ययेन जीवनस्य निमित्तत्वं प्रतिपादितम् । **"वसन्ते वसन्ते ज्योतिषा यजेत"** इत्यत्र च कालस्य निमित्तत्वं सप्तम्या । अत एव वीप्सानुवादस्सङ्गच्छते । तेन प्रतिनिमित्तं नैमित्तिकानुष्ठानं कार्यम्, सर्वाङ्गयुक्तञ्च तत्कार्यमित्युक्तं भवति । तत्तु न सम्भवति, न हि केनाऽपि पुरुषेण यावज्जीवं सर्वाङ्गानुष्ठानं कर्तुं शक्यत इत्यशक्यार्थविधायकत्वं

विधेरापद्येत । अतस्तत्परिहारार्थं विधिरेव स्वस्याऽङ्गविषये सङ्कोचमभ्युपगच्छन् प्रधानमात्रकरणसमर्थस्याऽपि तत्राऽधिकारमनुमन्यते । स्त्रियास्तु यद्यप्यस्त्यधिकारः, परं न स्वातन्त्र्येण । **"पाणिग्रहणात्तु सहत्वं कर्मसु, तथा पुण्यफलेषु" "धर्मे चाऽर्थे च कामे च नाऽतिचरितव्या त्वया"** इत्यादिना पत्या सहैव तस्याऽधिकारश्रवणात् । न च तस्या अप्यध्ययननिषेधश्रवणादुपनयनाभावाच्च कथमधिकार इति वाच्यम् । पत्युर्विद्ययैव तस्या अपि तद्वत्त्वसम्भवेनाऽधिकारोपपत्तेः । एवं दम्पत्योस्सहाधिकारो वैतानिकेषु कर्मसु, तद्धर्मवत्सु च केषुचिदेकाग्निसाध्येषु कर्मसु । सन्ध्यावन्दनजपादौ तु पुरुषस्य स्वातन्त्र्येणाऽधिकारो, न स्त्रियाः । एवं सावित्रीव्रतादौ तासामेवाऽधिकारो, न पुंसः । पूर्त्तादौ तु स्वातन्त्र्येण द्वयोरप्यधिकार इत्याद्यवगन्तव्यम् ।

एवं **"वर्षासु रथकारोऽग्नीनादधीत"** इति विहिताधाने रथकारस्याऽधिकारः । रथकारो नाम **"व्रात्यात्तु जायते शूद्रात्सुधन्वाऽऽचार्य एव च"** इति वचनात् **"सौधन्वना ऋभवस्सूरचक्षस"** इति मन्त्रवर्णनाच्च सौधन्वनापरपर्य्यायो वेदानधिकृतो जातिविशेषो, न तु शूद्रः । तस्याऽध्ययनाभावेन, विद्याभावात्तन्मात्रौपयिकं ज्ञानमनेनैव विधिनाऽऽक्षिप्यते । अत एव स नोत्तरक्रतुष्वधिक्रियते । अत एव चेदमाधानं नाऽग्निसंस्कारकम् । किन्तु लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफलकमिति ध्येयम् ।

एवं **"रौद्रं वास्तुमयं चरुं निर्वपेत्"** इति प्रक्रम्य **"एतया निषादस्थपतिं याजयेत्"** इति विहितायामिष्टौ निषादस्थपतेरधिकारः । निषादस्थपतिशब्दश्च निषादानां स्थपतिरिति न षष्ठीसमासनिष्पन्नः । तथात्वे पूर्वपदे लक्षणापत्तेः । किन्तु निषादश्चाऽसौ स्थपतिश्चेति कर्मधारयनिष्पन्नः । अतश्च निषादजातीयो यस्स्थपतिः स एवाऽधिक्रियते ।

न च तस्याऽग्निविद्ययोरभावेन तदौपायेकाग्निविद्याक्षेपकत्वकल्पने गौरवापत्तेः षष्ठीतत्पुरुषसमासमाश्रित्य त्रैवर्णिकमात्रपरत्वमस्त्विति वाच्यम्। लक्षणाया दुष्टत्वात्। गौरवस्य च फलमुखत्वात्। अतो निषादाख्यस्य ब्राह्मणाच्छूद्रायामुत्पन्नस्याऽनुलोमसङ्करजातिविशेषस्यैवाऽत्राऽधिकारः। अत्र मातृतो जातिकल्पनाच्छूद्र एवाऽयं जात्या ॥

## प्रतिनिधिनिरूपणम्

प्रसङ्गात्प्रतिनिधिर्निरूप्यते। श्रुतद्रव्यालाभे तदपचारे वा तत्सदृशं तत्कार्यकरणसमर्थं द्रव्यान्तरं प्रतिनिधिरित्युच्यते। यथा दर्शपूर्णमासादौ **"व्रीहिभिर्यजेत"** इत्यादिविधिविहितानां व्रीहीणामलाभे तत्सदृशानां नीवाराणां प्रतिनिधित्वम्। तैरेव च विहितकर्मानुष्ठानम्। न च व्रीहीणामेव यागसाधनत्वश्रवणान्नीवाराणां तदभावेन तैर्विहितयागनिष्पत्तिः कथमिति वाच्यम्। व्रीहिशास्त्रेण न व्रीहिमात्रस्य यागसाधनत्वमुच्यते, किन्तु व्रीहिव्यक्तीनां व्रीह्यवयवानां व्रीहित्वजातेश्चेति त्रितयस्याऽपि। तत्र व्रीहिषु त्रितयमप्यस्तीति तेषामेव मुख्यं साधनत्वम्। नीवारेषु तु नीवारत्वजातिः, नीवारावयवाः, नीवारव्यक्तिः, व्रीह्यवयवाश्चेति चतुष्टयमस्ति। अत एव व्रीहिसदृशा नीवाराः। व्रीह्यवयवसमानजातीयावयवसहितनीवारावयवारब्धत्वात्तेषाम्। अतश्च व्रीह्यलाभे व्रीहित्वजातेर्व्रीहिव्यक्तीनां चाऽप्राप्तावपि नीवारेषु व्रीह्यवयवसमानावयवानां केषाञ्चित् सत्वात्तेषामेव ग्रहणम्। नान्तरीयकत्वाच्च नीवारजातिव्यक्त्योर्ग्रहणमिति व्रीह्यवयवप्रयुक्तमेव नीवाराणां यागसाधनत्वम्। अतश्च व्रीह्यलाभे नीवाराणां प्रतिनिधित्वेन ग्रहणं सङ्गच्छत एव।

एवं **"खादिरो यूपो भवति"** इत्यादौ खदिराभावे कदरस्य ग्रहणम्, **"कौशं बर्हि"** रिति विहितानां कुशानामलाभे काशादिग्रहणञ्च द्रष्टव्यम्। एवञ्च मुख्याभावे सुसदृशं, तदभावे सदृशं, तदभावे मन्दसदृशं च प्रतिनिधेयम्। सत्यपि सादृश्ये केषाञ्चिन्निषेधादेव प्रतिनिधित्वेन न ग्रहणम्। यथा **"अयज्ञिया वै माषाः, वरकाः, कोद्रवाः"**, **"अना-**

श्रुतिर्वै जर्तिलाश्च गवीधुकाश्च'' इत्यादिना निषिद्धानां माषादीनां मुद्गादिप्रतिनिधित्वेन न ग्रहणम् ।

इदं च प्रतिनिधिग्रहणं दृष्टार्थस्थल एव । यत्र दृष्टविधया द्रव्यान्तरेण कार्यनिष्पत्तिर्भवति तत्रैव । अदृष्टार्थानान्तु प्रतिनिधिर्नाऽस्ति । तत्र मुख्यजन्यादृष्टस्य प्रतिनिधिनोत्पत्तौ प्रमाणाभावात् । तदुक्तम्—**"न देवताग्निशब्दक्रियमन्यार्थसंयोगात्"** इति । **अन्यार्थेन** अदृष्टेन **संयोगात्** सम्बन्धादित्यर्थः । **देवता** अग्न्यादिः, **अग्निः** आहवनीयादिर्होमाधारभूतः, **शब्दाः** मन्त्रगताः, **क्रियाः** प्रयाजादयः। सर्वेषामेषामदृष्टार्थत्वेन विधानात्तत्तज्जन्यादृष्टस्याऽन्यस्मादुत्पत्तौ प्रमाणाभावेन तेषां प्रतिनिधिर्नास्तीति भावः। एवंरीत्या सिद्धं प्रतिनिधिमुपादाय मुख्यालाभस्थले कर्माऽनुष्ठातुं प्रवृत्तो द्वित्रांश्च संस्कारान् सर्वान् वा तत्र कृतवानन्तरं च मुख्यं लब्धवान् तदा मुख्यं गृहीत्वा पुनस्तत्र संस्कारान् कृत्वा तेनैव कर्म कुर्वीत । मुख्यसम्भवे विकल्पोपादानस्याऽन्याय्यत्वात् । यदा तु प्रतिनिधिनैव कार्यं निष्पादितं तदा मुख्यलाभेऽपि न तस्योपादानम्, प्रयोजनाभावात् ।

एवं नियोजनादिकार्यमात्रयोग्यं संस्कारायोग्यञ्च मुख्यं लब्धं सकलकार्ययोग्यश्च प्रतिनिधिर्लभ्यते तदा संस्कारान् परित्यज्याऽपि **"गुणलोपे च मुख्यस्य"** इति न्यायेन मुख्येनैव कार्यसम्पादनम् । एवं प्रधानयागमात्रौपयिकास्स्विष्टकृदादिशेषकार्यापर्याप्ता व्रीहयो यदि प्राप्येरन् तत्र तैरेव पुरोडाशं कृत्वा प्रधानमात्रानुष्ठानम्, शेषकार्याणां तु लोप एवेत्यादि बोध्यम् ।

स **चाऽधिकारोऽ**ग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिविषयकस्त्रीपुमुभयगतः। **"अग्निहोत्रं जुहुयात्" "सोमेन यजेत"** इत्यादावाख्यातोपात्तसंख्यायास्तल्लक्षितकर्तर्यन्वयेन तस्यैकत्वप्रतीतावपि प्रमाणान्तरेण स्त्रीसद्वितीयस्यैव पुंसः कर्तृत्वावगमादाख्यातस्य कर्तृत्व एव लक्षणामङ्गीकृत्य तत्रैव

१ जर्तिलाः अरण्यतिलाः गवेधुका अरण्यगोधूमाः ।

चैकत्वान्वयः। अतश्चोभयोर्व्यासज्यवृत्ति कर्तृत्वमेकम्। अतश्च पुमानेक एव स्त्रीसद्वितीयः कर्मस्वधिकरोतीत्युत्सर्गः। यत्र तु विशेषश्रवणं तत्र द्वयोर्बहूनां वाऽधिकारस्स्त्रीसद्वितीयानामेव। अत एव "**क्षौमे वसानावग्निमादधीयाताम्**, इत्युत्पत्तिवाक्यसिद्धकर्तृत्वाधिष्ठानभूतस्त्रीपुमुभयगतद्वित्वानुवादस्सङ्गच्छते। अत एव च कर्तृत्वं कृत्याश्रयत्वसमनियतोऽखण्डोपाधिः। न तु कृत्याश्रयत्वमेव। तस्य प्रत्यात्मं कृतिभेदेन भेदाद्व्यासज्यवृत्तित्वानुपपत्तेः। न चैकत्वस्य कर्तृत्वेऽन्वयाङ्गीकारेऽनेकस्त्रीपुरुषग्रहणेऽपि तदबाधादग्निहोत्रादावपि बहुकर्तृकत्वं दुर्वारमिति वाच्यम्। असति विशेषग्राहकप्रमाणे प्रथमातिक्रमणे कारणाभावेनैकस्यैव ग्रहणौचित्यात्। अत एव यत्र स्त्रिया अपि ग्रहणे प्रमाणाभावः, तत्र सन्ध्यावन्दनश्राद्धादौ पुंस एकस्यैवाऽधिकार इति पूर्वमुक्तम्। यत्र तु विशेषग्राहकं प्रमाणं, तत्र द्वयोर्बहूनां वाऽधिकारः। यथा—"**एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्**" इति विहिते कुलाययज्ञादौ राज्ञस्तत्पुरोहितस्य च सस्त्रीकयोरधिकारः। एवमहीनेषु द्वयोर्बहूनां वाऽधिकारः, "**एको द्वौ बहवो वाऽहीनेन यजेरन्**" इति वचनबलात्। सत्रेषु बहूनामेवाऽधिकारः "**सप्तदशावराश्चतुर्विंशतिपरमास्सत्रमासीरन्**" इति वचनबलादेवेत्यादि बोध्यम्। एवं सत्रे कर्तृत्वानि बहूनि, तदधिष्ठानभूताश्च बहवः, तेषां च सम्भूयैव कर्तृत्वं, न पर्यायेणेति सिद्धम्। तत्र सत्यपि सम्भूयकारित्वे फलं पृथक् पृथगेव प्रत्येकभोग्यम्, न तु समवेतानाम्, न वाऽवयवशः। न चैवमेकस्मादेव कर्मणोऽनेकफलोत्पत्तौ योगसिध्यधिकरणविरोधापत्तिः। तत्रैकस्मात्कर्मण एकस्यैव फलस्योत्पत्तेस्सिद्धान्तितत्वादिति वाच्यम्। एकस्मात्कर्मण एकस्मिन्नात्मन्येकफलोत्पत्तेरेव तदधिकरणसिद्धान्तादात्मान्तरे तदुत्पत्तौ बाधकाभावात्। अतस्सिद्धं क्रतुविधिस्थले आधानाध्ययनसिद्धाग्निविद्यावतस्समर्थस्याऽधिकार इति॥

'न कलञ्जं भक्षयेत्', 'न सुरां पिबेत्' इत्यादिषु निषेधेषु तु नाऽग्निविद्यापेक्षा। तथात्वे न कोऽपि निषेधवाक्यान्यधीयीत। न वा जिज्ञासेत तदर्थम्। को हि नाम प्रत्यवायफलकं निषेधवाक्यार्थज्ञानमिच्छेत् ? यस्तदर्थमध्ययनमनुतिष्ठेत्। अग्नीनां तु तत्रोपयोग एव नाऽस्ति। अतो रागतः प्रवृत्त्युन्मुखस्य पुरुषमात्रस्य निषेधेष्वधिकारः। तत्राऽपि वर्णपुरस्कारेण प्रवृत्तेषु निषेधेषु 'ब्राह्मणो न सुरां पिबेदि'-त्यादिषु जातमात्रस्य ब्राह्मणस्याऽधिकारः। अतो जातमात्रस्याऽपि ब्राह्मणशिशोस्सुरापाने प्रत्यवायो भवत्येव पातित्यावहः। सामान्यनिषेधेषु तु "प्रागुपनयनात्कामचारवादभक्षाः" इति गौतमेनोपनयनात्प्राग्यथेच्छभक्षणादेरभ्यनुज्ञानात्तदनन्तरमेवाऽधिकारः। येषामुपनयनाभावस्त्रैवर्णिकातिरिक्तानां, तेषामुपनयनस्थाने विवाहविधानात् तत्प्रभृत्येव निषेधेष्वधिकार इति बोध्यम्। इत्थं संक्षेपेणाऽधिकारिविधिर्निरूपितः। एवं उत्पत्तिविनियोगप्रयोगाधिकारिविधयश्चत्वारः प्रतिपादिताः। तेषां द्वितीयादिषष्ठाध्यायान्तगोचरत्वं पूर्वोक्तविधयाऽवगन्तव्यम्। यथोक्तं *मिश्रैः*—

उत्पत्तिविधिनामैको यो द्वितीये विचार्यते।
चतुर्थे पञ्चमे चैव प्रयोगविधिचिन्तनम्॥
विनियोगविधिस्त्वन्यो यस्तृतीये विचार्यते।
अधिकारविधिस्त्वन्यो यष्षष्ठाध्यायगोचरः॥ इति।

इति तन्त्रसिद्धान्तरत्नावल्यां द्वितीयपरिच्छेदेऽधिकारनिरूपणं नाम चतुर्थः प्रकाशः॥



इति महामहोपाध्यायपण्डितसार्वभौमश्रीवेङ्कटसुब्रह्मण्यापरनामधेयश्रीचिन्नस्वामिशास्त्रिविरचितायां तन्त्रसिद्धान्तरत्नावल्यां द्वितीयः परिच्छेदः॥



## अथ तृतीयः परिच्छेदः

### अतिदेशनिरूपणम्

एतावता औपदेशिका विषया निरूपिताः। अतः **परमतिदेशो** निरूप्यते। तत्र **अतिदेशो** नामाऽन्यत्र श्रुतानामङ्गानामन्यत्र प्रापकं शास्त्रम्। यथाऽऽहुः—

**प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु।**
**धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः॥** इति।

यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनाऽवधारितस्तस्य पदार्थस्य तादृशोपकारद्वाराऽन्याङ्गताबोधकं प्रमाणमतिदेश इति **नव्याः**। अस्ति हीदं लक्षणं **"एतद्ब्राह्मणान्येव पञ्च हवींषि"** इत्यादिप्रत्यक्षवचनातिदेशे, प्रकृतिवद्विकृतिः कर्तव्या, सौर्ययागेन ब्रह्मवर्चसरूपं फलं भावयेदाग्नेयवत् इत्याद्यनुमितवचनातिदेशे च। चातुर्मास्यान्तर्गतद्वितीयपर्वावान्तरप्रकरण-गतमिदं वचनम्। वैश्वदेविकानामङ्गानां यादृशोपकारजनकत्वं तादृशोप-कारसम्पादनार्थमेव तेषां वरुणप्रघासेऽतिदेशः। एवं प्रयाजादीनां दार्श-पौर्णमासिकत्वेनाऽवधारितानां दृष्टादृष्टरूपयादृशोपकारजनकत्वं तेषां तेनैव रूपेण तादृशोपकारजननार्थमेव सौर्यादावतिदेशः। स चाऽतिदेशस्त्रि-विधः-वचनातिदेशो, नामातिदेशः, चोदनालिङ्गातिदेशश्चेति। **नव्यास्तु** अतिदेशस्य द्वैविध्यमेवाऽङ्गीकृत्य वचनातिदेशस्य प्रत्यक्षत्वानुमितत्वभेदेन द्वैविध्यम्, अनुमितस्य सादृश्यकल्पितत्वस्थानापत्तिकल्पितत्वाश्रयतोधर्मा-तिदेशकत्वरूपेण त्रैविध्यञ्चाऽङ्गीकुर्वन्ति।

तत्र प्रत्यक्षवचनातिदेशो यथा—चातुर्मास्येषु वैश्वदेवाख्ये प्रथमे पर्वणि—**"आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादश-कपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवी-**

**मामिक्षां, द्यावापृथिव्यमेककपालम्"** इत्याग्नेयादीनष्टौ यागान् विधाय वरुणप्रघासाख्ये तदनन्तरपर्वणि तानेव पञ्चाऽऽद्यान् विधायाऽनन्तरं श्रुतम्–**"एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि"** इति। अत्र ब्राह्मणपदेन ब्राह्मणविहिताः पदार्था उच्यन्ते। तथा च **इतराणि** वैश्वदेविकान्याद्यानि **पञ्च हवींषि** यादृशविधायकब्राह्मणवन्ति ब्राह्मणविहिताङ्गकलापवन्ति वा तादृशब्राह्मणवन्ति वारुणप्रघासिकान्यप्याद्यानि पञ्च हवींषीति वाक्यस्याऽर्थः। अत्र **'एतद्ब्राह्मणानी'**ति प्रत्यक्षवचनेनैवाऽतिदेशविधानात् प्रत्यक्षवचनातिदेशोऽयम्।

द्वितीयो यथा–कौण्डपायिनामयनाख्ये संवत्सरसाध्ये सत्रे **"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहति"** इत्यत्र श्रुतमग्निहोत्रपदं प्रसिद्धान्नित्याग्निहोत्रात्कर्मणो धर्मातिदेशकम्। इदं प्रकरणान्तरन्यायेन प्रसिद्धादग्निहोत्राद्भिन्नं कर्मेति पूर्वं निरूपितं प्रकरणान्तरनिरूपणावसरे[1]। तस्य च सन्निधौ धर्माणामनाम्नानाद्धर्मापेक्षायामनेनैवाऽग्निहोत्रनाम्ना गौण्या वृत्त्या तद्धर्मवत्त्वरूपसाध्यसादृश्येनाऽग्निहोत्रबोधकेन तद्धर्मा अतिदिश्यन्ते। तृतीयः शब्दगतेनाऽर्थगतेन वा लिङ्गेन सामान्येन कल्प्यमानश्चोदनालिङ्गातिदेशः। यथा–सौर्यादौ। तत्र हि निर्वापः, एकदेवताकत्वम्, औषधद्रव्यकत्वञ्च लिङ्गम्। तदिदं लिङ्गमाग्नेययागेऽप्यस्तीत्याग्नेयतस्सादृश्यात्सौर्ये तद्धर्माणामतिदेशः।

एवं द्विदेवत्येषु **"आग्नावैष्णवमेकादशकपालं निर्वपेत्" "ऐन्द्रावैष्णवमेकादशकपालम्"** इत्यादिवाक्यविहितेषु यागेषु निर्वापवत्त्वद्विदैवत्यत्वपञ्चाक्षरघटितदेवताबोधकपदवत्त्वसादृश्येनाऽग्नीषोमीयात्पुरोडाशयागाद्धर्मातिदेशः। ऐन्द्राग्नादिषु त्र्यक्षरघटितदेवतावाचकपदवत्सु द्विदैवत्येष्वैन्द्राग्नाद्धर्मातिदेशः। **"सरस्वतीमाज्यस्य यजेते"** त्यादा-

१ See P. 87. L. 4–21.

चाज्यद्रव्यके कर्मण्युपांशुयाजधर्मातिदेशः। **"दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्"** इत्यत्राऽनेके यागा विधीयन्त इत्युक्तं मीमांसाकौस्तुभे[1]। तत्र दधियाग ऐन्द्रदधियागधर्माः, दधिमत्त्वसादृश्यात्। पयोयागे त्वैन्द्रपयोयागधर्माः, पयोवत्त्वसादृश्यात्। मधूदकघृतेषूपांशुयाजधर्माः, द्रव्यगतवर्णसाम्यात्। आमिक्षावाजिनयोः पयोयागधर्माः पशुप्रभवत्वसाम्यात्। धानातण्डुलेष्वाग्नेयधर्मातिदेशः, औषधद्रव्यकत्वसादृश्यात्।

तत्र देवतासामान्याच्च द्रव्यसामान्यं बलीयः। नवमे देवताधिकरणे देवताया द्रव्यापेक्षया गुणत्वप्रतिपादनात् **"अपि वा द्रव्यप्रधानत्वाद्गुणत्वे देवताश्रुति"** रिति। यागो हि देवतोद्देशविशिष्टद्रव्यत्यागरूपः। तत्र द्रव्यस्य प्रधानभूते त्यागे विशेषणत्वं, देवतायाश्च तद्विशेषणीभूतोद्देशे, अतश्चाऽन्तरङ्गत्वाद्द्रव्यस्य प्राबल्यम्। बहिरङ्गत्वाच्च देवतायास्तद्गतसादृश्यस्य च दौर्बल्यम्। एवमग्नीषोमीयपशोर्दार्शिकपयोयागप्रकृतिकत्वं, पशुप्रभवत्वसाम्यात्, पयो हि पशुप्रभवं द्रव्यम्। पशुरपि पशुप्रभव एव, अतः पशुस्सान्नाय्यविकारः। अग्नीषोमीयस्तु पशुरन्येषां काम्यानां पशुयागानां निरूढपशुयागस्य सवनीयस्य च प्रकृतिः। तस्य च सत्यपि सान्नाय्यविकारत्वेन ततो धर्माणामतिदेशात्तेनैव नैराकाङ्क्ष्ये, यूपादिबहुतरधर्माणां पश्वपेक्षितानामाम्नानात्, तेषाञ्च स्थानप्रमाणेन तदङ्गत्वं ततो विकृतिष्वतिदेशश्च भवत्येवेति सिद्धमग्नीषोमीयपशोरितरपशुयागप्रकृतित्वम्। सवनीयस्तु ऐकादशिनानां[2] प्रकृतिः, सुत्याकालिकत्वसाम्यात्। ऐकादशिनानाञ्च प्राजापत्यादिपशुयागगणप्रकृतित्वं गणत्वसाम्यात्।

---

१ See P, 176. L. from १८ मी. कौ. Vol I chow. edn.

२ आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुस्सौम्यः, पौष्णश्श्यामः, शितिपृष्ठो बार्हस्पत्यः, शिल्पो वैश्वदेवः, ऐन्द्रोऽरुणः, मारुतः कल्माषः, ऐन्द्राग्नस्संहितः, अधोरामस्सावित्रः, वारुणः पेत्वः, इति विहिता एकादश पशवः ऐकादशिन इत्युच्यन्ते। See तै० सं० का ५. ५. २२।

सोमयागेषु अग्निष्टोमसंस्थाया इतरसोमयागप्रकृतित्वमव्यक्तत्वसामान्यात्। **अव्यक्तत्वञ्च** स्वाङ्गतया विहितदेवताभावः। सर्वेष्वपि हि सोमयागेषु न यागोद्देशेन देवता विधीयन्ते। **"ऐन्द्रवायवं गृह्णाति" 'मैत्रावरुणं गृह्णाति'** इत्यादिभिर्ग्रहणार्थं विहिताभिरेव देवताभिः प्रसङ्गादुपकारसिद्धेः। ग्रहणार्थं विहिता देवताः स्वनिरूपकं यागमपेक्षन्ते। यागसम्बन्धं विना तासां देवतात्वस्याऽपरिपूर्तेः। **'सोमेन यजेते'**ति विहितो यागो देवतामपेक्षत इति तयोर्नष्टाश्वदग्धरथवत्सम्प्रयोगो भवति। अतस्सोमयागोऽव्यक्तः। अव्यक्तत्वसादृश्याच्चोत्तरेषां सोमयागानां तद्विकृतित्वम्।

तत्राऽग्निष्टोमसंस्थैवेतरासां संस्थानां उद्भिदादीनामेकाहानां च प्रकृतिः। **संस्था नाम** क्रतुप्रयोगवृत्तिस्तोत्रोपरमः। यस्मिन् क्रतौ यत् स्तोत्रमन्तिमं, न ततस्स्तोत्रान्तरमस्ति स क्रतुस्तत्संस्थाकोऽभिधीयते। यथा अग्निष्टोमस्तोत्रमन्तिमं यस्मिन् क्रतौ सोऽग्निष्टोम इत्यभिधीयते। उक्थ्येऽग्निष्टोमस्तोत्रोत्तरं त्रीण्यन्यान्युक्थ्याख्यस्त्रोत्राणि सन्ति। अतश्च स क्रतुरुक्थ्यः, **उक्थ्यसंस्थाक** इत्युच्यते। षोडशिनि तदुत्तरं षोडशिसामसाध्यं स्तोत्रमेकम्। अतस्स **षोडशिसंस्थः**। अतिरात्रे तदुत्तरं द्वादशस्तोत्रात्मकास्त्रयो रात्रिपर्यायाः। अतस्सो**ऽतिरात्रसंस्थः**। यास्तु अत्यग्निष्टोमवाजपेयाप्तोर्यामाख्यास्तिस्रस्संस्थाः ता एतासामेव वैपरीत्यादिना निष्पन्नाः। यत्राऽग्निष्टोमस्तोत्रोत्तरमुक्थ्यमकृत्वा षोडशिस्तोत्रं क्रियते सो**ऽत्यग्निष्टोमः**। यथावस्थितषोडश्युत्तरं यत्र वाजपेयाख्यं स्तोत्रं क्रियते स **वाजपेयः**। यस्मिन्नतिरात्रे चतुर्थो रात्रिपर्यायो वर्धते सो**ऽप्तोर्यामः** क्रतुः। एवं सप्त सोमसंस्थाश्श्रुतौ परिगण्यन्ते स्मृतिषु च। द्विरात्रप्रभृत्येकादशरात्रान्ताः क्रतवो**ऽहीनाः**। त्रयोदशरात्रप्रभृति सहस्रसंवत्सरान्ताः क्रतवस्**सत्राणि**। द्वादशाहस्तूभयात्मकः। स एव सर्वेषामहीनानां सत्राणाञ्च प्रकृतिः। तत्राऽहीनात्मकोऽहीनानाम्। सत्रात्मकश्च सत्राणाम्। आसोपायिचोदनाचोदितत्वं **सत्रत्वम्**। यजतिचोदनाचोदितत्व**महीन-**

त्वम्। यथाह सूत्रकारः–**द्विरात्रादीनामैकादशरात्रादहीनत्वम्, यजतिचोदनात् "त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात्"** इति। तत्राऽपि द्वादशाहाद्गवामयने गणत्वसामान्यात्, ततश्च संवत्सरसाध्येष्वतिदेशस्संवत्सरसाध्यत्वसाम्यात्। ये च साद्यस्क्राः, साहस्रा इति समुदायरूपेण श्रुताः तेषु पूर्वपूर्वेभ्य उत्तरोत्तरेष्वतिदेशो धर्माणामिति वेदितव्यम्। एवं त्रिविधोऽप्यतिदेशस्सङ्क्षेपेण निरूपितः।

## स्थानापत्त्यतिदेशः

फलचमसे तु स्थानापत्त्या सोमधर्माणामतिदेशः। तथा हि **"यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्"** इति श्रुतम्। स्तिभिन्यः[1] अङ्कुराणि फलानि वा। राजन्यकर्तृके सोमयागे यजमानचमसे सोमबाधकत्वेन सोमस्थानापन्नतया फलचमसोऽयं विधीयते। दध्युन्मृष्टन्यग्रोधाङ्कुरचूर्णानां **फलचमस** इति संज्ञा। अत्र यद्यपि फलचमसस्य भक्षसम्बन्ध एव प्रतीयते 'भक्षं प्रयच्छेत्' इति भक्षसंस्कार्यत्वस्यैवाऽवगमात्। तथाऽप्यनुपयुक्तस्य संस्कारायोगात् भक्षस्य च यागोपयुक्तद्रव्यसंस्कारत्वेन निर्ज्ञातत्वात् तत्सिध्यर्थं तस्य यागसम्बन्धोऽपि कल्प्यते। एवञ्च सोमस्थाने फलचमसविधानात्तेषां सोमवद्यागसम्बन्धस्याऽप्यवगतेः तदर्थं धर्माकाङ्क्षायां स्थानापत्त्यतिदेशेन सोमीयानां धर्माणां तत्र प्राप्तिः।

---

१ स्तिभिन्यो मुकुलानि इति न्यायमालायां माधवाचार्याः। See जै. न्या. P. 14 L. 11 Chow. edn फलानीति सोमनाथः See. P. शां. 294. L. 24 N. S. edn. फलस्तवकानिति रुद्रदत्तः। See आप. श्रौ. १२. २४. ५. P. 430. L. 14 vol. Cal. edn. यत्त्वत्र भाट्टभास्करे स्तिभिनीपदेन न्यग्रोधे लम्बमानं रज्वाकारवस्तु गृह्यत इत्याद्युक्तम्। तदयुक्तम्। तथा व्यवहाराभावात्।

## आश्रयतो धर्मातिदेशः

एवं "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्र नैयमिकाग्निहोत्रकरणकभावनातो भिन्नेन्द्रियफलकदधिकरणकभावना विधीयते। तस्याश्चाऽधर्मिकाया धर्माकाङ्क्षायामाश्रयभूतान्नैयमिकाग्निहोत्राद्धर्मप्राप्तिरित्याश्रयतो धर्मातिदेशस्तत्र। इदं चाऽतिदेशद्वयं न सप्तमाध्यायगोचरः। किन्तु प्रथमस्य तृतीये द्वितीयस्य च द्वितीये प्रसङ्गान्निरूपणमिति ध्येयम्। एवञ्च विकृतिभावनाया निर्धर्मिकाया धर्मापेक्षायां पूर्वोक्तातिदेशान्यतमेनाऽतिदेशेन धर्माणां प्राप्तिः। तत्र विकृतिभावनया प्राकृता उपकारा एवाऽपेक्ष्यन्त इति त एव प्रथममतिदिश्यन्ते। तत्पृष्ठभावेन च तज्जनकीभूताः पदार्था अतिदिश्यन्त इति सिद्धम्। तत्पृष्ठभावेन च तद्विधायकानां ब्राह्मणवाक्यानामप्यतिदेशं केचिदिच्छन्ति। अत्र त्रिविधेष्वप्यतिदेशेषु प्रत्यक्षवचनातिदेशस्सर्वप्रबलः, प्रत्यक्षत्वादेव। नामातिदेशस्थले तु नाम्नः प्रत्यक्षत्वेऽपि गौण्यैव वृत्त्या धर्मातिदेशकत्वाद्दौर्बल्यम्। चोदनालिङ्गातिदेशस्थले तु वाक्यस्य कल्पनीयत्वात्सर्वदौर्बल्यम्॥

*इत्यतिदेशनिरूपणम्॥*

**इति तन्त्रसिद्धान्तरत्नावल्यां तृतीयपरिच्छेदेऽतिदेशनिरूपणं नाम प्रथमः प्रकाशः॥**



## ऊहनिरूपणम्

प्राकृतोपकारपृष्ठभावेनाऽतिदिष्टाः प्राकृताः पदार्थाः प्राकृतोपकारजनकत्वेनैवाऽतिदिश्यन्ते, न त्वप्राकृतकार्यार्थतया। तदर्थं च ते कञ्चिदूहमपेक्षन्ते। ऊहो नाम प्राकृतस्य पदार्थस्य विकृतौ कार्यमुखेनाऽऽगतस्य तत्रत्यकार्यवशेनाऽन्यथाभावः। यथोक्तं *प्राचीनै*स्तल्लक्षणम्—

प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगोऽविकृत ऊह्यमानतयोदितः ॥ इति ।

येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतम्, विकृतौ तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नवृत्तित्वमिति नवीनानां निष्कृष्टमूहलक्षणम् । स त्रिविधः—मन्त्रोहस्सामोहस्संस्कारोहश्चेति । तत्राऽऽद्यो यथा—"देवस्य त्वा सवितुः" इत्यादिः "अग्नये जुष्टं निर्वपामि" इत्यन्तो हविर्निर्वापमन्त्रो दर्शपूर्णमासगताग्नेययागाङ्गत्वेन विनियुक्तः कार्यवशेन सौर्यादावतिदिष्टः तदीयदेवताप्रकाशनार्थं प्राकृताग्निपदपरित्यागेन सूर्यपदघटितत्वेनोह्यते—सूर्याय जुष्टं निर्वपामीति । अयं च पदान्तरप्रक्षेपो भाक्त ऊहः । मुख्योहस्तु प्रकाश्यत्वसम्बन्धेन प्रकृतावग्नित्वावच्छिन्नवर्तिनो मन्त्रस्य विकृतौ तेनैव सम्बन्धेन तद्भिन्नसूर्यत्वावच्छिन्नवृत्तित्वमेव । तच्च प्रकाशनमग्निपदघटितेन न सम्भवतीति तत्सिद्ध्यर्थमेवाऽग्निपदस्थाने सूर्यपदं प्रक्षिप्यते । एवं प्रोक्षणावघातादीनां संस्काराणां संस्कार्यतासम्बन्धेन प्रकृतौ व्रीहित्वावच्छिन्नवर्त्तिनां तेनैव सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्ननीवारादिवृत्तित्वम् । तथा साम्न्यपि आईभावादिरूपाणां प्रकृतौ यत्स्थानगतैकारादिवृत्तित्वं, विकृतौ तद्भिन्नस्थानगतैकारादिवृत्तित्वम् ।

स चाऽयमूहो धर्माणामपूर्वार्थत्व एव सिध्यति, न स्वरूपार्थत्वे । व्रीह्यादिस्वरूपार्थत्वे हि तस्य नीवारादिष्वसत्वेन तद्द्रव्यकेषु यागेषु तत्प्राप्त्यभावेनोहस्याऽप्रसक्तेः । अपूर्वार्थत्वे तु तस्य विकृतावपि सत्वेन तदर्थं तत्र तेषां प्राप्तौ तदनुरोधेनोहः प्राप्नुयात् । न च तेषां तत्तद्व्रीह्यादिप्रयुक्तत्वेनैवोपपत्तावपूर्वसाधनत्वकल्पनायोगान्न सिध्यत्यूह इति शङ्कनीयम्, व्रीह्यादिस्वरूपाणां प्रोक्षणाद्यजन्यत्वेन तेषां व्रीह्यादिप्रयुक्तत्वे आनर्थक्यापत्तेरपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् । अतश्च व्रीह्यादि-

पदैरपूर्वसाधनत्वे लक्षणीये तत्रैव तेषामुपक्षीणत्वेन नोद्देश्यतावच्छेदकत्वेन व्रीहित्वादिसमर्पकत्वमिति न व्रीहित्वादीनामुद्देश्यतावच्छेदकत्वं तत्कोटिप्रविष्टत्वं वा, किन्त्वपूर्वसाधनत्वस्यैव तत्। तस्य च नीवारादिष्वपि सत्वात्तत्राऽपि प्रोक्षणमिति सिध्यत्यूहः।

एवं "अग्नेरहं देवयज्ययाऽन्नादो भूयासम्" इत्यादिमन्त्रलिङ्गकल्प्यश्रुतौ मन्त्रविनियोजिकायां नाऽग्नित्वादेरुद्देश्यतावच्छेदकत्वम्, पूर्वोक्तदोषापत्तेः। न च देवताप्रसादस्यैव मन्त्रार्थवादादिसिद्धस्योद्देश्यत्वमङ्गीकृत्य तदुद्देशेनैव धर्माणां विधानमस्तु, कृतमपूर्वकल्पनयेति वाच्यम्। अर्थवादादीनामन्यपरत्वेन देवताविग्रहादिबोधने तात्पर्याभावात्। मन्त्रमय्यास्त्यागकालीनोच्चारणकर्मीभूताया एव देवताया मीमांसकैस्स्वीकारेण तत्र प्रसादादेरसम्भवात्। सत्यपि वा मन्त्रार्थवादादिप्रामाण्येन देवताविग्रहादिस्वीकारेऽपूर्वमन्तरा नेष्टसिद्धिः। प्रसादस्य सकलाङ्गविशिष्टप्रधानपरिसमाप्त्यनन्तरमेव परमापूर्ववज्जन्यत्वेन ततः पूर्वमपूर्वाभावे विशरारूणां कर्मणां परस्परं सम्बन्धानापत्तेः। अत एव देवताविग्रहादीनामङ्गीकर्तृभिः परैरप्यपूर्वमङ्गीकृतम्। "[१]तस्मादस्त्यतिशयः कश्चित्" इत्यादिना। [२]उपपादितश्चैतत्पुरस्तात्। एवं च देवताया अप्यग्न्यादेः प्रकृतापूर्वीयदेवतात्वेनैवोद्देश्यत्वाद्विकृतावपि तत्सत्वादूहसिद्धिः।

तच्चाऽपूर्वं यदुद्देशेन धर्माणां विधानं श्रुतं तत्स्वरूपे आनर्थक्यप्रसक्तौ तदव्यवहितोत्तरजन्यमेव स्वीक्रियत उद्देश्यतया। न तु परमापूर्वम्, तस्य व्यवहितत्वात्। अवान्तरापूर्वार्थत्वेऽपि धर्माणामानर्थक्यपरिहाराच्च। परम्परया तस्याऽपि फलवत्वाच्च। एवञ्च यत्राऽवघातपेषणादौ न मध्ये व्रीह्यादावपूर्वान्तरम्, तत्र तेषां प्रधानयागजन्योत्पत्त्यपूर्वार्थत्वम्। यत्र त्वदृष्टार्थसन्निपत्योपकारकेषु प्रोक्षणोत्पवनादिषु स्वजन्यादृष्टमस्ति तत्र

---

१ See न्यायकु. P. 37. L. 25. chow edn २. See P. 76. L. 19.

तदर्थत्वमेव, तत्स्वरूपार्थत्वेऽप्यानर्थक्याभावात् । व्यवहितप्रधानापूर्वपर्यन्तानुधावने प्रयोजनाभावात् । एवमारादुपकारकाङ्गानां प्रयाजपश्वङ्गभूताभिक्रमणयूपसंस्कारादीनां प्रयाजदैक्षादिजन्यापूर्वार्थत्वमेव युक्तम्, न तु प्रधानापूर्वार्थत्वम् ।

स चोहः प्रकृतौ समवेतार्थेष्वेव प्रवर्तेत, न त्वसमवेतार्थेषु । समवेतार्थत्वं च स्वशक्यार्थस्य दृष्टविधयैवाऽपूर्वसाधनीभूतार्थसम्बन्धित्वम् । 'देवस्य त्वा' इति मन्त्रेऽग्निनिर्वापपदयोस्तथात्वात् । विकृतावपि तत्सम्पादनायाऽग्निपदस्थाने सूर्यपदप्रक्षेपः क्रियते । देवस्य, सवितुः, इत्यादिपदानां त्वसमवेतार्थत्वेन स्तुतिमात्रप्रयोजनकत्वाद्विकृतावपि तेनैव रूपेण तदुपपत्तेरनूहः । अत एव दर्शपूर्णमासप्रकरणे श्रुतस्येडानिगदान्तर्गतस्य[1] "य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्" इत्यस्य यज्ञपतिवर्धनप्रकाशकस्य बहुयजमानके सत्राङ्गभूतदीक्षणीयादौ न बहुवचनान्ततयोहः । अत्र यज्ञपतिवर्धनस्य फलत्वाभावेन केवलं स्तुत्यर्थमुपात्तस्य समवेतार्थत्वाभावात् ।

एवं ज्योतिष्टोमाङ्गभूतसुब्रह्मण्यानिगदे श्रुतस्य "इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेष, वृषणश्वस्य मेने" इति मन्त्रस्येन्द्रप्रकाशकस्य प्रकृतौ समवेतार्थत्वादग्निष्टुत्याग्नेय्यां सुब्रह्मण्यायामिन्द्रपदस्थानेऽग्निपदोहः—"अग्न आगच्छ" इत्यादि । हरिवदादिपदानां तु स्तुत्यर्थमुपात्तानामसमवेतार्थत्वाद्यथावस्थितैरेव पदैस्तुत्युपपत्तेरनूह एव । अतश्च प्रकृतौ समवेतार्थानामेव विकृतावूहो नाऽसमवेतार्थानामिति सिद्धम् ।

समवेतार्थानामपि न प्रकृतावूहः । "न प्रकृतावूहोऽस्ती"ति निषेधात् । अत एव दर्शपूर्णमासयोर्यवप्रयोगे "व्रीहीणां मेध सुमनस्यमानः" इत्यस्य लोप एव ।

---

१ इडाभक्षणाङ्गतया प्रयुज्यमानो मन्त्रविशेषः इडानिगदः । स च "इडोपहूता" (तै. ब्रा. ३. ५. १३.) इत्यादिः ।

एवं प्रतिनिधिस्थलेऽपि व्रीह्यवयवानादायैव नीवारादीनां साधनत्वोपपादनात्तेषां व्रीह्यादिपदेनैव प्रकाशनोपपत्तेर्विकृतावपि नोहः। विकृतौ यवप्रयोगेऽप्यूहोऽस्तीति ध्येयम्।

एवं साम्नामपि "**कवतीषु रथन्तरं गायति**"[1] "**यद्योन्यां तदुत्तरयोर्गायति**" इत्यादिवचनैरन्यत्रोत्पन्नानामन्यत्राऽतिदिष्टानामृगक्षराभिव्यक्तिरूपदृष्टप्रयोजनवशात् प्रकृतौ यादृशसन्ध्यक्षरविश्लेषकत्वं विकृतौ तादृशकार्यकारित्वमेव। एवञ्च विकृतावेकारादेः प्राकृतस्थानभिन्नस्थानगतत्वेऽपि तेषामेव विश्लेष आईभावात्मकः। न तु तत्स्थानगतस्यैवाऽक्षरान्तरस्यापि, अदृष्टार्थत्वापत्तेः। तथाहि—"**अभि त्वा शूर नोनुमः**" इत्यस्यामृच्युत्पन्नं रथन्तराख्यं साम। तेन रथन्तरस्य साम्नः "**अभि त्वा**" इतीयमृग्योनिभूता। तस्य "**रथन्तरं पृष्ठं भवति**" इति पृष्ठस्तोत्राङ्गत्वेन विनियोगे कृते "**एकं साम तृचे क्रियते स्तोत्रीयम्**" इति वचनेनैकस्यैव साम्नस्स्तोत्रसम्पत्तये तिसृष्वृक्षु गानं विधीयते। तदर्थं "**रथन्तरमुत्तरयोर्गायति**" इत्यनेन योन्यामुत्पन्नस्यैवोत्तराग्रन्थपठितयोरुत्तरयोर्ऋचोरतिदेशः क्रियते। तत्र स्वयोन्यां पठ्यमानं साम तदक्षराणामेकारोकारादीनां आईभावात्मकाभिव्यक्तिरूपं संस्कारं जनयद्दृष्टम्, उत्तरयोरपि च तादृशैकारैकारोकारादीनामन्यस्थानगतानामपि तादृशमाईभावात्मकं विश्लेषमेव जनयति दृष्टार्थत्वाय। न त्वक्षरान्तराणामपि तत्स्थानगतानाम्, अदृष्टार्थत्वापातात्। एवं सामान्तरेष्वपि द्रष्टव्यम्। विस्तरस्त्वाकरे द्रष्टव्यः। ग्रन्थकाठिन्यभयान्नेह प्रपञ्च्यते। एवं संक्षेपेण त्रिविधोऽप्यूहो निरूपितः॥

इत्यूहनिरूपणम्॥

**इति तन्त्रसिद्धान्तरत्नावल्यां तृतीयपरिच्छेदे ऊहनिरूपणं नाम द्वितीयः प्रकाशः॥**

---

१ कया नश्चित्र आभुवत्, इत्यादयः 'क' शब्दघटिता ऋचः कवत्यः।

## बाधनिरूपणम्

अथ बाधो निरूप्यते। बाधो नाम निवृत्तिः। प्रकृतितोऽतिदेशतस्सम्भवत्प्राप्तिकानामङ्गानां केन चित् कारणेन विकृतावननुष्ठानमिति यावत्। स त्रिविधः–अर्थलोपात्, प्रत्याम्नानात्, प्रतिषेधादिति। तत्राऽऽद्यो यथा–"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इत्यायुष्कामेष्टौ द्रव्यत्वेन विहितानां कृष्णलानां[1] व्रीहिस्थानापन्नत्वेन तत्र प्राप्तस्याऽवघातस्य वितुषीभावरूपप्रयोजनलोपाद्बाधः। अवघातस्य हि प्रयोजनं तुषविमोकः। न हि सुवर्णखण्डरूपेषु कृष्णलेषु तुषास्सन्ति। येन तद्विमोकार्थमवघातोऽनुष्ठीयेत। इदञ्च कृष्णलोदाहरणं तेषां व्रीहिवत् प्रदेयप्रकृतित्वं कृत्वा चिन्तया। वस्तुतस्तु कृष्णलानामेव साक्षात्प्रदेयत्वेन विधानात् "घृते श्रपयति" इति घृताधिकरणकश्रपणविधानेऽपि तत्र विक्लेदनासम्भवेन श्रपणस्याऽग्निसंयोगमात्रे पर्यवसानात् प्रदेयधर्माणां पर्यग्निकरणादीनां प्राप्तिसम्भवेऽप्यवघातप्राप्तौ प्रमाणाभावः। व्रीहयो हि प्रकृतौ न साक्षात्प्रदेयाः। किन्तु प्रदेयपुरोडाशप्रकृतिभूताः। अतस्तत्र विहितोऽवघातो विकृतावपि प्रदेयप्रकृतिसंस्कारकत्वेनैवाऽतिदिश्येत, अन्यथाऽप्राकृतकार्यकारित्वापत्तेः। अतश्च प्रदेयप्रकृतिसंस्कारकोऽवघातो न प्रदेयभूतेषु कृष्णलेषु प्रवर्तते। अतो नेदमर्थलोपोदाहरणम्, तत्तु मैत्राबार्हस्पत्येष्टौ "स्वयंदिनं बर्हिर्भवति" इत्यत्र स्वतश्छिन्नानामेव बर्हिषां ग्रहणविधानाच्छेदनरूपस्याऽर्थस्य तत्र लोपान्न बर्हिर्लवनादीनां संस्काराणामनुष्ठानम्। द्वितीयस्तु–विकृतिविशेषे "नैवारश्चरुर्भवति" इति

---

१ ते मध्यमा यवास्त्रय एकः कृष्णलः। इति विज्ञानेश्वरः See या. स्मृ. व्या. पृ. 110 L. 33 N. S. Press. कृष्णलशब्दस्सुवर्णशकलवाचीत्येव माधवः See जै. न्या. P. 480 L. 18 Poona edn. कृष्णलतुलितानि सुवर्णानि इति भाट्टभास्करः। See also मनु. 1. 134 श्लो. सर्षपाष्षट् यवो मध्यस्त्रियवं त्वेककृष्णलम्। त्रिभिर्यवैः कृष्णलं रक्तिकेति प्रसिद्धम् (कुल्लूकः)

विहितैर्नीवारैः प्राकृतानां व्रीहीणां बाधः। "शरमयं बर्हिर्भवति" इत्यत्र वेदिपरिस्तरणादिकार्ये विहितैश्शरैः प्राकृतानां कुशानां बाधः। शरास्तृणविशेषाः।

तृतीयस्तु-चातुर्मास्यान्तर्गते महापितृयज्ञे "नाऽऽर्षेयं वृणीते, न होतारम्" इतिनिषेधात् आर्षेयहोतृवरणभिन्नं सर्वमङ्गजातमनुतिष्ठेदिति वचनकल्पनात् होतृवरणादेर्निवृत्तिः। अत्र पर्युदास एवाऽङ्गीक्रियते, न प्रतिषेधः। प्रतिषेधाङ्गीकरणे हि अप्रसक्तस्य प्रतिषेधायोगात् प्रतिषेध्यस्य प्रसक्तिर्वक्तव्या। प्रसक्तिश्च शास्त्रेणेति शास्त्रप्राप्तस्याऽऽत्यन्तिकनिषेधायोगाद्विकल्पापत्तिः। स चाष्टदोषदुष्ट इति तत्परिहारार्थं पर्युदासोऽङ्गीक्रियते। पर्युदासे हि न प्राप्तिर्विषयस्याऽऽवश्यकी। तद्भिन्न एव विध्यभ्युपगमात्। तत्र प्राप्त्यभावादेव च नाऽनुष्ठानमिति।

एवं "[1]यजतिषु येयजामहं करोति नानूयाजेषु" इत्यत्र पर्युदास एवाऽऽश्रयणीयः, न प्रतिषेधः। प्रतिषेधाङ्गीकारे तस्य प्राप्तिसापेक्षत्वेन शास्त्रेणैव प्राप्तिर्वक्तव्या। शास्त्रप्राप्तस्य चाऽत्यन्तनिषेधायोगात् पक्षे विधेयस्याऽपि प्रवृत्तिर्वक्तव्या। तदा च विकल्पापत्तिः। तथा हि—सर्वत्र निषेधस्थले नञर्थस्याऽपीतरपदार्थवदाख्यातार्थ एवाऽन्वयोऽङ्गीकर्तव्यः। आख्यातार्थश्च प्रवृत्तिः कृतिरिति पूर्वं निरूपितम्। तत्राऽन्वितो नञ् प्रवृ-

---

१ यजतिषु सर्वेष्वपि यागेषु याज्यातः पूर्वं होत्रा "ये यजामहे" इति पठनीयोऽनूयाजवर्जम् इति वाक्यार्थः। अत्र यजतिशब्दो यागवाचकः। अनूयाजव्यतिरिक्तेषु यजतिचोदनाचोदितेषु यागेषु याज्यातः पूर्वं 'ये यजामहे' इत्ययमंशः पठनीय इति। एवं च याज्यातः पूर्वं येयजामहे इति पठित्वा ततो देवतावाचकं पदं द्वितीयान्तमुक्त्वा ततो याज्यापाठः। तदन्ते च वषट्कारप्रयोगः। यथाऽऽग्नेययागे अध्वर्युणा प्रधानानुष्ठानाय याज्यापाठार्थं "अग्निं यज" इति प्रैषे दत्ते अनन्तरं होता "येयजामहेऽग्निं भुवो यज्ञस्य रजसश्च + हव्यवाहाँ वौषट्" इति पठेत्। ततोऽध्वर्युर्जुह्वादौ स्थितं हविः पुरोडाशमाहवनीये प्रक्षिपेत् इति समुदितार्थः।

त्यभावं बोधयति। प्रवृत्त्यभावश्च निवृत्तिरेव। एवञ्च प्रतिषेधस्थले सर्वत्र धात्वर्थविषयकनिवृत्तिरेव बोध्यते प्रवृत्त्यभावरूपा। अभावबोधनञ्च प्रतियोगिसापेक्षम्। सा च प्रतियोगिप्राप्ती रागतो यत्र, निषेधश्च शास्त्रेण, तत्र दुर्बलेन रागेण प्रापितस्य प्रबलेन शास्त्रेणाऽत्यन्तबाधः। यथा "न कलञ्जं भक्षयेत्" इत्यादौ। यत्र तु शास्त्रमेव प्रापकं, यथा प्रकृतोदाहरणे। उभयोश्शास्त्रत्वाविशेषादन्यतरेणाऽन्यतरस्याऽत्यन्तबाधायोगादुभयोः पाक्षिकीं प्रवृत्तिमङ्गीकृत्य विकल्पे पर्यवसानं कार्यम्। विकल्पश्चाऽष्टदोषदुष्टः। दोषाष्टकं च विधिनिषेधशास्त्रार्थयोर्व्रीहियवशास्त्रार्थयोर्वा पर्यायेणाऽनुष्ठाने भवति। तथैव प्रथमं विधिशास्त्रं व्रीहिशास्त्रं वा गृहीतं तस्य निषेधशास्त्रे यवशास्त्रे वा प्राप्तप्रामाण्यपरित्यागः। अप्रतीताप्रामाण्यकल्पनमिति दोषद्वयम्। अनन्तरं तेनैव प्रयोगान्तरे निषेधशास्त्रस्य यवशास्त्रस्य वा ग्रहणे कृते तत्र पूर्वस्वीकृतप्रामाण्यपरित्यागः, परित्यक्तप्रामाण्यस्वीकार इति निषेधशास्त्रे यवशास्त्रे वा चत्वारो दोषाः, एवं निषेधशास्त्रस्य प्रथमग्रहणे पूर्वोक्तप्रकारेण विधिशास्त्रे व्रीहिशास्त्रे वा चत्वारो दोषाश्च प्रादुःष्युः। तद्भिया "नानूयाजेषु" इत्यत्र पर्युदासोऽङ्गीक्रियते। पर्युदासो नाम उत्तरपदार्थेन सह नञर्थस्य सम्बन्धः। यथोक्तम्—

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्।
पर्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ्॥ इति।

एवं चाऽत्र नञनूयाजपदाभ्यामनूयाजव्यतिरिक्तविषयसमर्पणादनूयाजभिन्नेषु यागेषु येयजामहः कर्तव्यतया विधीयते। अनूयाजेषु तु येयजामहो न कर्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पप्रसक्तिः। अतो 'नानूयाजेषु' इत्यत्र पर्युदास एव।

एवं 'अग्निहोत्रं जुहोति' 'विप्राय गां ददाति' इत्यादिना पुरु-

१ See भाट्टरहस्य P. 14. L. 20. न वा प्रवृत्यभावनिवृत्योर्वा भेदः।

षार्थतया विहितानां दानहोमादीनां 'दीक्षितो न ददाति, न जुहोति' इत्यादिना क्रत्वर्थतयाऽऽत्यन्तिकतया निषेधः—सोमयागे दीक्षितेन यजमानेन पुरुषार्था दानहोमादयो न कर्तव्या इति। एवं रागतः प्राप्तस्य स्वस्त्र्युपगमनस्य 'ऋतावुपेयात्' इत्युतुकाले नियमितस्याऽपि दार्शपौर्णमासिकेन "न स्त्रियमुपेयात्" इति निषेधेन क्रत्वर्थतयाऽत्यन्तनिषेधः। एवञ्च क्रतुमध्ये स्वस्त्र्युपगमने कृते क्रतुर्विगुणो भवेत्। पुरुषो न प्रत्यवेयात्। एवं "न कलञ्जं भक्षयेत्" इति पुरुषार्थनिषेधस्य क्रतुमध्येऽनुष्ठाने पुरुष एव प्रत्यवेयात्, न तु क्रतुर्विगुणो भवेदिति बोध्यम्। यथोक्तं वार्तिके—

यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।
न क्रतोस्तस्य वैगुण्यं यथाचोदितसिद्धितः॥ इति।

केचित्तु—"दीक्षितो न जुहोती" त्यादौ पर्युदासमेवाऽङ्गीकुर्वन्तः शास्त्रप्राप्तस्याऽपि कारकमात्रनिषेध आत्यन्तिकनिषेध एव। यथा "रात्रौ श्राद्धं न कुर्वीत" इत्यत्र। अत्र हि निषेधस्य न श्राद्धं विषयः, किन्तु रात्रिरूपः काल एवाऽधिकरणकारकात्मकः। अतस्तत्राऽत्यन्तनिषेध एव विधिनिषेधयोर्भिन्नविषयत्वात् इत्याहुः। यत्र तु प्राप्तिरपि शास्त्रेणैव, विधिनिषेधावपि समानविषयकौ तत्र शास्त्रप्राप्तस्याऽत्यन्तनिषेधायोगाद्विकल्पे पर्यवसानम्। यथा—"अतिरात्रे षोडशिनं गृह्णाति, नाऽतिरात्रे षोडशिनं गृह्णाति" इत्यत्र। तत्र निषेधेन न विधेयस्याऽनिष्टसाधनत्वं बोध्यते, किन्तु अतिरात्रे षोडशिग्रहणाभावेऽपीतराङ्गैः क्रतूपकारसिद्धिमात्रम्।

एवं यत्र पर्युदासस्वीकारेऽपि न विकल्पान्मुक्तिः तत्र प्रतिषेध एवाऽऽश्रीयते। यथा—"न तौ पशौ करोति" इत्यत्र। तौ आज्यभागौ

१ See भाट्टदीपिका P. 109. L. 25. Vol. IV, Mysore edn.

न पशुयागे कुर्यादित्यर्थः। अत्र हि पशुप्रकरणे "अग्नय आज्यस्याऽवदीयमानस्याऽनुब्रूहि" "सोमायाऽऽज्यस्याऽवदीयमानस्याऽनुब्रूहि" इत्यादिप्रैषाम्नानात् तेषां च लिङ्गादाज्यभागाङ्गत्वावगतेस्तद्बलादाज्यभागयोरप्यनुष्ठानं प्रतीयते। पर्युदासबलाच्चाऽननुष्ठानमिति विकल्पे पर्यवस्यति। अतो 'भक्षितेऽपि लशुने न रोगशान्ति'रिति न्यायेन पर्युदासाङ्गीकरणेऽपि विकल्पादपरिमुक्तः प्रतिषेध एव तत्राऽङ्गीक्रियते।

एवं सामान्यशास्त्रविहितस्य विशेषशास्त्रेण बाधः, यथा "यदाहवनीये जुह्वति" इति सामान्यशास्त्रेण वैदिकहोमसामान्योद्देशेन विहितस्याऽऽहवनीयस्य "अश्वस्य पदे पदे जुहोति" "सप्तमे पदे जुहोति" इति विशेषशास्त्रेण होमविशेषोद्देशेन विहितेन पदेन बाधः। सामान्यशास्त्रं हि पदातिरिक्तस्थले चरितार्थं सत् पदमात्रविषयकेण निरवकाशेन पदशास्त्रेण पदविषये बाध्यते।

एवं नित्यं नैमित्तिकेन बाध्यते। यथा दर्शपूर्णमासयोर्नित्यतया विहितं सामिधेन्यनुवचनगतं "पञ्चदश सामिधेनीरन्वाह" इति पाञ्चदश्यं "सप्तदश वैश्यस्य" इति वाक्यविहितेन वैश्यकर्तृनिमित्तकेन साप्तदश्येन बाध्यते। नित्यनैमित्तिके काम्येन बाध्येते। पूर्वं परेण बाध्यते। यथा ज्योतिष्टोमे प्रातस्सवने बहिष्पवमानाख्यस्तोत्रकरणाय चात्वालदेशं प्रति कच्छं धृत्वा प्रसर्पतामध्वर्युब्रह्मयजमानप्रस्तोतृप्रतिहर्तुद्गातॄणां मध्ये [1]यद्युद्गाताऽपच्छिन्द्यात्, अदक्षिणं तं यज्ञमिष्ट्वा तेन

---

१ प्रातस्सवने बहिष्पवमानाख्यं स्तोत्रं करिष्यन्त ऋत्विजः शालाया बहिः प्रसर्पन्ति। तदानीमेकस्य पृष्ठतोऽपरः, इत्येवं पिपीलिकावत् पङ्क्त्याकारेण गच्छन्ति। तत्र पूर्वं गन्तुः कच्छं गृहीत्वैव तत्पृष्ठतोऽन्यो गच्छेत्। तत्र अध्वर्युः प्रस्तोता, प्रतिहर्ता, उद्गाता, ब्रह्मा, यजमानः, इति प्रसर्पतां क्रमः। एवं प्रसर्पणकाले यदि प्रमादादुद्गाता स्वहस्तधृतं कच्छं मुञ्चेत् तदा तं यज्ञं दक्षिणां विनैव परिसमाप्य पुनस्तेनैव यजेत पूर्वसङ्कल्पितां दक्षिणां द्वितीयप्रयोगे दद्यात्। तथैव प्रमादात्प्रतिहर्ता कच्छं विमुञ्चेत् तदा सर्वस्वदक्षिणां दद्यादित्यर्थः। अपच्छेदस्सम्बन्धविच्छेदः, कच्छपरित्याग इति यावत्।

पुनर्यजेत, तत्र तद्दद्याद्यत्पूर्वत्र दास्यन् स्यात्" "यदि प्रतिहर्ताऽपच्छिन्द्यात्, सर्ववेदसं दद्यात्" इति प्रायश्चित्तमपच्छेदे निमित्ते विहितम्। तत्र द्वयोर्युगपदपच्छेदे प्रायश्चित्तयोर्विकल्पः, विरोधात्। पौर्वापर्ये तु परनिमित्तकमेव प्रायश्चित्तं कार्यम्। तस्य पूर्वनिरपेक्षत्वात्पूर्वोपमर्देनैवाऽऽत्मलाभात्। अतः परेण पूर्वस्य बाधः। यत्र तु परस्य पूर्वोपजीवित्वम्, तत्रोपजीव्यविरोधस्याऽन्याय्यत्वात् न परेण पूर्वस्य बाधः, किन्तु पूर्वमेव प्रबलं भवति। यथोक्तं *वार्तिके*—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥ इति।

एवं चाऽपच्छेदपौर्वापर्ये परनिमित्तकमेव प्रायश्चित्तमनुष्ठेयमिति स्थितम्।

एवं यत्र क्लृप्तोपकारकप्राकृताङ्गपुनःश्रवणम्, यथा—चातुर्मास्यान्तर्गतगृहमेधीयेष्टौ "आज्यभागौ यजति" "स्विष्टकृतं यजति" इत्यादि, तत्राऽतिदेशेनैवाऽऽज्यभागस्विष्टकृतोरपीतराङ्गवत्प्राप्तिसम्भवे तयोः पुनःश्रवणबलादतिदेशतः पूर्वमेव क्लृप्तोपकारकयोस्तयोर्विधिस्वीकारेण विकृतेराकाङ्क्षोपशमं सम्पाद्य तेनेतरप्राकृताङ्गबाधनं क्रियते। तेनाऽऽज्यभागस्विष्टकृदतिरिक्तानां प्राकृताङ्गानां निवृत्तिः। तत्राऽप्यवान्तरसादृश्यादाज्यभागाभ्यामारादुपकारकाणां स्विष्टकृद्यागेन सन्निपत्योपकारकाणामङ्गानां च बाधः। एवमुपसदवभृथयोरप्यपूर्वत्वं प्राकृताङ्गपरिलोपनद्वारा। तत्राऽपि "स्रुवेणाऽऽघारमाघारयति" "अप्सुमन्तावाज्यभागौ यजति" इति प्राकृताङ्गपुनःश्रवणादितराङ्गानां निवृत्तिप्रतीतेः। न चाऽऽघारे स्रुवविधानेन, आज्यभागयोरप्सुमत्वविधानेन च चरितार्थयोर्विध्योर्नाऽपूर्वतापादकत्वमिति वाच्यम्। स्रुवस्याऽतिदेशतः, अप्सुमत्पदघटित-

१ सर्ववेदसं सर्वस्वम्। २ अप्सु मे सोमो अब्रवीत्, अप्स्वग्ने सधिष्टव इति अप्सुपदघटितौ मन्त्रावप्सुमन्तौ। तद्वन्तावाज्याभागावप्यप्सुमन्ताविति।

मन्त्रवत्वस्य च लिङ्गक्रमाभ्यामेव प्राप्तिसम्भवेनाऽविधेयत्वात्। अतः क्लृप्तोपकारैः प्राकृताङ्गैरेवाऽऽकाङ्क्षाशान्तेरितराङ्गानां स्वत एव निवृत्तेस्तन्निवृत्तिरूपो बाधः। एवं निरूपितं बाधकारणत्रयम्।

स चाऽयं बाधो द्विविधः—प्राप्तबाधोऽप्राप्तबाधश्चेति। तत्र क्लृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वं प्राप्तबाधत्वम्। अङ्गताबोधकलिङ्गादिकल्प्यश्रुत्यादिकल्पनाप्रतिबन्धकत्वमप्राप्तबाधत्वम्। प्राप्तबाधस्थले हि सामान्यशास्त्रस्य क्लृप्तत्वेनाऽकल्पनीयत्वात्तस्य विशेषशास्त्रेण स्वविषयविषयताप्रतिबन्धमात्रं क्रियते। अप्राप्तबाधस्थले तु यावदुत्तरं प्रमाणं स्वविषयस्याऽङ्गत्वबोधनाय स्वपूर्वप्रमाणकल्पने प्रवृत्तं तावत्पूर्वं प्रमाणं स्वपूर्वप्रमाणकल्पनाद्वारा स्वविषयस्याऽङ्गत्वं बोधयतीति तस्य नैराकाङ्क्ष्यादुत्तरप्रमाणेन पूर्वप्रमाणकल्पनमेव न क्रियत इत्यप्राप्तिदशायामेव बाधकरणादप्राप्तबाध इत्युच्यते। एवञ्च श्रुतिलिङ्गादिबाधोऽप्राप्तबाधः। एवं गृहमेधीयादिबाधोऽप्यप्राप्तबाध एव। गृहमेधीये हि आज्यभागादिभिः क्लृप्तोपकारैर्नैराकाङ्क्ष्यात्तत्रेतराङ्गविषयकातिदेशस्यैवाऽकल्पनात्। एवं तृतीयोक्तो नित्यनैमित्तिकादिबाधः प्राप्तबाध एव, तत्र प्रापकप्रमाणस्य क्लृप्तत्वात्। अतश्च दाशमिको बाधः प्राप्तबाधः तार्तीयीको बाधोऽप्राप्तबाध इत्युत्सर्गमात्रम्। उभयोरुभयत्र निरूपणात्।

एवं विशेषविधिना सामान्यविधिवत्सामान्यनिषेधोऽपि बाध्यते। यथा—"**अग्नीषोमीयं पशुमालभेते**"ति विशेषविधिना "**न हिंस्यात्सर्वा भूतानी**"ति सामान्यनिषेधो बाध्यते। एवं च निषेधस्य विहितेतरविषयत्वेन सङ्कोचः क्रियते।

ननु निषेधस्य किमर्थं सङ्कोचः क्रियते? तेन हिंसामात्रस्याऽनिष्टजनकत्वमेव बोध्यताम्। एवञ्च हिंसाया अनर्थजनकत्वे सत्यपि विधिबलात्तस्याः क्रतूपकारकत्वस्याऽप्यवगतेः तदपेक्षिणस्तत्र प्रवृत्तिर्भवति। न

ह्यनर्थसाधनत्वावगतौ प्रवर्तनाविषयत्वं विरुध्यते । अत एव लोके हिंसाजन्यानर्थे बलवद्दोषाभावज्ञानदशायां तात्कालिकेष्टे रागौत्कव्यात्प्रवृत्तिर्दृश्यत एव । अतश्च अग्नीषोमीयवायव्यादिपशुहिंसायास्सत्यप्यनर्थहेतुत्वे क्रतूपकारभूत्यादिसाधनत्वाविरोधान्निषेधस्य तदतिरिक्तविषयत्वकल्पनेन सङ्कोचो नाऽऽवश्यक इति चेत्—"**धर्मेण पापमपनुदति**"

"**प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयः परः ।**"

"**न हि धर्माद्भवेत्किञ्चित्पापं नरकदं क्वचित् ॥**"

इत्याद्यसङ्कुचद्वृत्तिकश्रुतिस्मृत्यादिपर्यालोचनया पापाजनकत्वव्याप्यं धर्मत्वं, पापजनकत्वव्याप्यमधर्मत्वमिति प्रतीयते । अतश्च विधिस्थले प्रवर्तनयेष्टसाधनत्वानुमानवत् पापाजनकत्वस्याऽप्यनुमानान्निषेधस्तद्विरोधेन तदतिरिक्तविषय एव पापजनकत्वं कल्पयन् तदतिरिक्तविषयस्सम्पद्यत इति सिद्धो विशेषविधिना सामान्यनिषेधस्य सङ्कोचात्मको बाधः । अतस्सिद्धं निषेधस्य विहितेतरविषयत्वम्, विहिते निषेधाप्रवृत्तेश्च न तस्याऽनर्थजनकत्वमिति ।

न चैवं प्राप्तबाधस्थलेऽपि विशेषशास्त्रेण सामान्यशास्त्रस्य विशेषविषयत्वमेव यदि प्रतिबध्येत, तर्हि तस्य विशेषेऽप्राप्तत्वात्तद्बाधस्याऽप्राप्तबाधत्वमेव स्यान्न प्राप्तबाधत्वम्, एवमतिदेशस्थलेऽपि बाधितपदार्थांशे तात्पर्याभावकल्पनेन तदतिरिक्तविषयत्वमेव कल्पनीयमिति तत्राऽप्ययं दोष आपद्येतेति वाच्यम् । सामान्यशास्त्रेण विशेषशास्त्रादर्शनप्रयुक्ता या पुरुषस्य प्रयोगविषये भ्रान्तिः सैव विशेषशास्त्रेण निवर्त्यते । अतश्च भ्रान्त्या प्राप्तस्यैव बाधः प्राप्तबाध इत्युच्यते । श्रुतिलिङ्गादौ तु न भ्रान्त्याऽपि प्राप्तिः, प्रापकप्रमाणस्याऽप्रवृत्तत्वात् । अत एव सामान्यशास्त्रस्य विशेषविषयताप्रतिबन्धकत्वमेव प्राप्तबाधत्वम् । यथोक्तं *मिश्रैः*—

**"साधारणस्य शास्त्रस्य विशेषविषयादिना ।**
**सङ्कोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयते ॥**
**कल्प्यस्य शास्त्रस्य तु कल्पनं यत् विरुध्यते मूलनिकृन्तनेन ।**
**क्लृप्तेन शीघ्रेण फलापहारादप्राप्तबाधं तमुदाहरन्ति" ॥** इति ।

विस्तरस्तु मीमांसाकौस्तुभादौ द्रष्टव्य इत्यास्तां तावत् । यत्र तु न तादृशं बाधकारणं किञ्चित् तत्र प्राकृताङ्गैस्सह वैकृतानामङ्गानां समुच्चय एव । यथा—तत्र तत्र विकृतिसन्निधावाम्नातान्यपूर्वाण्यङ्गान्युपहोमादीनि प्राकृताङ्गैर्नारिष्ठहोमैस्सह स्थानैकत्वेऽपि समुच्चयं लभन्ते । एवं विकृतिविशेषे पठितास्स्तोत्रशस्त्रादयः प्राकृतैस्तैस्सह समुच्चयं प्राप्नुवन्ति । तथा आमनहोमानामपि प्राकृतैरनूयाजादिभिस्सह समुच्चयो, न बाधः । एवमन्यत्राऽप्यूह्यम् ॥

*इति बाधनिरूपणम् ॥*

**इति तन्त्रसिद्धान्तरत्नावल्यां तृतीयपरिच्छेदे बाधनिरूपणं नाम तृतीयः प्रकाशः ॥**

## तन्त्रनिरूपणम्

एवमतिदेशप्राप्तानां पदार्थानां बाधसमुच्चयाभ्यामियत्तायां निर्धारितायामपि क्वचिदनेकप्रधानेषु युगपदनुष्ठीयमानेषु तदुद्देशेनाऽङ्गानां सकृदेवाऽनुष्ठानं प्रयोगविधिर्बोधयति । तदेव **तन्त्र**मित्युच्यते । अत एवानेकोद्देशेनाऽङ्गानां सकृदनुष्ठानं तन्त्रमिति तल्लक्षणम् । तच्च प्रकृतिविकृत्युभयसाधारणम् । प्रकृतौ दर्शपूर्णमासयोराग्नेयादित्रितयोद्देशेन प्रयाजानूयाजाज्यभागादीनां सकृदनुष्ठानात् । विकृतौ चातुर्मास्येषु वैश्वदेवादिषु चतुर्ष्वपि पर्वस्वाग्नेयाद्युद्देशेन प्रकृतितोऽतिदिष्टानां प्रयाजानूयाजादीनां सकृदनुष्ठानात् । तत्र हि **"पौर्णमास्यां पौर्णमास्या यजेत", "वसन्ते**

**वैश्वदेवेन यजेत"** इत्यादिवचनेषु पौर्णमासीवैश्वदेवाद्येकपदोपादानादेक-प्रयोगविधिपरिग्रहोऽवगम्यते। स च तदैव घटेत यदा वैश्वदेवपद्वाच्या-ग्नेयादियागाष्टकोद्देशेन पूर्वोत्तराङ्गानां सकृदेवाऽनुष्ठानं पौर्णमासीपदवा-च्याग्नेयादियागत्रयोद्देशेन तदीयपूर्वोत्तराङ्गानां सकृदनुष्ठानं च भवेत्। तत्रैकफलोद्देशेन विनियुक्तानामनेकेषामेकविधिपरिग्रहात्तन्त्रवदेककालकर्तृ-दक्षिणानामेकत्वेऽपि तन्त्रेणैवाऽनुष्ठानम्। तथा– **"समे दर्शपूर्णमासाभ्यां यजेते"** त्यत्र देशैक्यात् **"पौर्णमास्यां पौर्णमास्या यजेत"** इत्यत्रैक-कालिकत्वात्कर्तृरेकत्वाच्च तन्त्रेणाऽनुष्ठानम्।

एवं **"अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योति"** रित्यादिना पृथगुत्पन्नानामपि **"एतेन सहस्रदक्षिणेन यजेते"** त्यनेन दक्षिणैक्यबोधनद्वारा प्रयोगैक्यावगमनात्तदङ्गानां तन्त्रेणाऽनुष्ठानम्। तेषां भेदे तु भेद एव। यथा–वैश्वदेववरुणप्रघासयोः। **"वसन्ते वैश्वदेवेन यजेत", "वर्षासु वरुणप्रघासैर्यजेते"** त्यादौ कालभेदात्प्रयोगभेदः। राजसूयान्तर्गतावेष्टौ **"आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा", "ऐन्द्रमेकादशकपालमृषभो दक्षिणे"** त्यादौ दक्षिणाभेदात्प्रयोगभेदः। दक्षिणा हि भृतिरूपा कर्मकराणामृत्विजामानतिं सम्पादयति। आनतिश्च सकृद्दत्तयैव तयोत्पाद्यत इति पुनःश्रुतायास्तस्या आनतिभेदापादनद्वारा कर्तृभेदापादकत्वम्। तद्भेदाच्च प्रयोगभेदस्सिद्ध्यति।

एवं वरुणप्रघास एव दक्षिणोत्तरविहार[1]योरनुष्ठीयमानानां प्रधानानां देशकर्तृभेदेन प्रयोगभेदावगमात्तदङ्गानां प्रयाजानूयाजादीनां विहारद्वयेऽपि पृथगेवाऽनुष्ठानम्। अत्र प्रधानमात्रे श्रुतस्याऽपि देशकालादेर्न तन्मात्रार्थ-त्वम्, किन्तु अङ्गप्रधानोभयार्थत्वमेव। प्रधानविधिना ह्यङ्गविधिसहकृतेन

१ विहारः वेदिः, वरुणप्रघासेषु वेदिद्वयमस्ति दक्षिणत उत्तरतश्च। सैव विहारशब्देनोच्यते।

प्रयोगविध्यपरपर्यायेणाऽङ्गप्रधानयोस्साहित्यमवबोध्यत इत्युक्तं प्रयोगविधिनिरूपणावसरे। तच्च साहित्यमेकदेशकालानुष्ठान एव सम्पाद्येतेत्यङ्गप्रधानयोरेकदेशकालिकत्वं प्रयोगविधिनैवाऽक्षिप्यत इति सिध्यति तयोरेकदेशकालकर्तव्यता। यत्र तु विशिष्य वचनं भेदप्रमापकं तत्र भेदः। यथा—**"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"**त्यत्र वाजपेयबृहस्पतिसवयोस्सत्यप्यङ्गाङ्गिभावे **"शरदि वाजपेयेन यजेत"**, **"वसन्ते बृहस्पतिसवेन यजेते"**ति कालभेदश्रवणा'द्वाजपेयेनेष्ट्वे'ति वाजपेयप्रयोगपरिसमाप्त्यनन्तरमेव बृहस्पतिसवानुष्ठानविधानाच्च तद्भेदः। अत एवोक्तं सूत्रकृता **"अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम्"** इति। तत्राऽनेकप्रधानस्थलेऽङ्गेषु क्रियमाणाऽऽवृत्तिर्द्विविधा—दण्डकलितवदावृत्तिः स्वस्थानविवृद्धिश्चेति। अनुष्ठेयान्यङ्गानि तावन्त्यपि सकृदनुष्ठाय पुनस्तथैव तेषामनुष्ठानमिति **दण्डकलितवदावृत्तिः**। एकैकमङ्गं यावद्वारमनुष्ठाय पुनर्द्वितीयस्य तावद्वारमनुष्ठानमिति **स्वस्थानविवृद्धिः**। यथा क्षेत्रमाने कश्चित्कृत्स्नमेव मानदण्डं निवेश्य तदनन्तरदेशेऽपि तद्वदेव कृत्स्नं निवेश्य क्षेत्रं मीयते सा दण्डकलितवदावृत्तिः। स्वस्यैव स्थाने यावद्वारं विवृद्धिः स्वस्थानविवृद्धिः। अत्र सर्वत्र स्वस्थानविवृद्धिरौत्सर्गिकी। स्वपूर्वपदार्थेऽनुष्ठिते स्वस्योपस्थितेः, तेन यावद्वारं स्वानुष्ठानसंभवात्। दण्डकलितवदावृत्तौ तु समुदायान्तिमपदार्थेऽनुष्ठिते पुनस्तेन प्रथमपदार्थोपस्थितिः कष्टसाध्येति सा गौरवग्रस्ता। यत्र तु तद्ग्राहकं प्रमाणं तत्र दण्डकलितवदावृत्तिरिति ज्ञेयम्।

देशकालकर्तॄणामैक्येऽपि क्वचिद्वचनादावृत्तिः। यथा **"संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति" "अग्नये पवमानाय निरुप्य पावकशुचिभ्यां निर्वपेत्"**इत्यादौ। एवमसत्यपि वचने प्रतिप्रधानं गुणावृत्तिन्यायेन केषाञ्चिदङ्गानामावृत्त्याऽनुष्ठानम्। यथा निर्वापलवनस्तरणाज्य-

ग्रहणेषु तत्तन्मन्त्राणामङ्गभूतानाम् । "**देवस्य त्वेति**" निर्वापमन्त्रस्य हि प्रतिनिर्वापमावृत्तिः । "**बर्हिर्देवसदनम्**" इत्यस्य प्रतिबर्हिर्लवनम्, "**ऊर्णाम्रदसं त्वा स्तृणामी**"त्यस्य स्तरणमन्त्रस्य वेद्यां प्रतिस्तरणम्, "**शुक्रन्त्वा शुक्रायामि**"त्यस्य प्रत्याज्यग्रहणञ्चाऽऽवृत्तिः । एवमेव नैमित्तिकानां निमित्तानुविधाय्यनुष्ठानानां प्रतिनिमित्तमावृत्तिः । यदि तु केनचित्कारणेन नैमित्तिकानुष्ठाने विलम्बते तदा तत्पूर्वमुत्पन्नानेकनिमित्तोद्देशेनाऽपि सकृदेव नैमित्तिकानुष्ठानम् । अत एव चण्डालस्पर्शनिमित्तकस्नानकरणात्पूर्वमनेकचण्डालस्पर्शेऽपि सर्वोद्देशेन सकृदेव स्नानकरणम् । अतस्सिद्धमनेकेषां प्रधानानामगृह्यमाणविशेषत्वेऽङ्गानां तन्त्रता । गृह्यमाणविशेषत्वे त्वावृत्तिरिति । एवं निरूपितौ सङ्क्षेपेण तन्त्रावापौ ॥

*इति तन्त्रनिरूपणम्*



## प्रसङ्गनिरूपणम्

अतः परं **प्रसङ्गो** निरूप्यते । अन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानं **प्रसङ्ग** इति तल्लक्षणम् । यथा—पशुयागार्थमनुष्ठितैरेव प्रयाजैः पशुपुरोडाशेऽप्युपकारलाभान्न तदर्थं प्रयाजाद्यनुष्ठानम् । ननु तन्त्रस्थलेऽप्यङ्गानावृत्तिरूपाङ्गाननुष्ठानस्यैव सत्वात्को भेदस्तन्त्रप्रसङ्गयोरिति चेत्—तन्त्रस्थलेऽविशेषात्सर्वेषामुद्देश्यत्वम् । प्रसङ्गस्थले त्वेकस्यैव तत्, इतरस्याऽऽनुषङ्गिकतयोपकारलाभः । अत एवोक्तं भाष्यकृता—

**साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः ।**
**एवमेव प्रसङ्गस्स्याद्विद्यमाने स्वके विधौ** ॥ इति ।

यदनेकोद्देशेनाऽनुष्ठीयते **तत्तन्त्रम्** । यदन्यार्थमनुष्ठितं स्वसाधनत्वेन गृह्णाति सोऽप्रयोजकः । यथा "**पुरोडाशकपालेन तुषानुपवपति**"

इत्यत्र पुरोडाशार्थं संपादितं कपालं स्वसाधनत्वेन तुषोपवापो गृह्णाति। एतच्च पूर्वमेवोपपादितम्। यत्रोभयमपि परस्परनैरपेक्ष्येणाऽङ्गग्राहकं सदप्येकत्राऽनुष्ठितैरेवाऽङ्गैर्लब्धोपकारं न स्वार्थमङ्गानि पृथगनुष्ठापयति, तत्र प्रसङ्ग इति तेषां परस्परं भेदः। यथा पशुपुरोडाशः। यानि त्वङ्गानि पशौ नाऽनुष्ठीयन्तेऽवघाताज्यभागादीनि तेषामनुष्ठानं पशुपुरोडाशे भवति। अवघातस्य हि वितुषीभावप्रयोजनकत्वात्पशौ च तदभावान्न तत्र तदनुष्ठानम्। आज्यभागयोरपि "**न तौ पशौ करोती**"ति निषेधान्नाऽनुष्ठानं पक्षे। अतस्तद्विषये पशुपुरोडाशोऽनुष्ठापक एव।

तत्रैककार्योद्देशेन विहितानां दृष्टार्थत्वे विकल्पः। यथा "**व्रीहिभिर्यजेत**" "**यवैर्यजेत**" इति पुरोडाशसम्पादनरूपैककार्योद्देशेन विहितानां व्रीहीणां यवानाञ्च विकल्पः। अर्थप्रकाशनरूपैककार्योद्देशेन श्रुत्या लिङ्गादिना वा प्रापितानां मन्त्राणां विकल्पः, तत्रैकेनैव द्रव्येण मन्त्रेण वा साधनाकाङ्क्षायाः स्मारकाङ्क्षाया वा निवृत्तेस्साधनान्तरस्य मन्त्रान्तरस्य वाऽऽकाङ्क्षाभावादेव निवृत्तिः। अत एव साधनान्तरविधेः प्रयोगान्तरमादायैव चारितार्थ्यम्। दृष्टार्थानामपि यत्र समुच्चयबोधकप्रमाणसत्वं तत्र समुच्चय एव। यथा "**दधि मधु घृतमापो धाना**" इत्यत्रैकयागपक्षे[1] दध्यादीनां समुच्चितानामेव साधनत्वम्। "**तां चतुर्भिरभ्रिमादत्ते**"[2] इति संख्याविधिबलात्समुच्चयः। यथोक्तं सूत्रकारेण—

"**एकार्थास्तु विकल्पेरन्**" इति। "**मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पस्स्यात्संख्याविहितेषु समुच्चयोऽसन्निपात**" इति च। **एकार्थाः** एकप्रयोजनकाः। **सन्निपातित्वात्** क्रियया सह सम्बद्धत्वात्।

---

१. न्यायसुधाकारः दध्यादिसप्तकद्रव्यक एक एव याग इति मनुते। पार्थसारथिमिश्रः खण्डदेवादयश्च नवीना अनेकयागपक्षमङ्गीकुर्वन्ति।

२. अभ्रिः मृत्खननार्थस्साधनविशेषः।

एवं जपस्तुत्याशीरभिधानानां समुच्चयः । सन्तमप्यर्थमविवक्षित्वा मन्त्राणामदृष्टार्थं प्रयोगकाल उच्चारणमात्रं जपः । गुणिनिष्ठगुणकीर्तनं स्तुतिः । आयुरादिफलाशासनमाशीः । अदृष्टार्थमेव गुणविशिष्टगुणिकीर्तनमभिधानम् । सोमक्रयस्य सत्यपि दृष्टार्थत्वे "तं वै दशभिः क्रीणाती"ति वचनात्समुच्चयः । एवमन्यत्राऽप्यूह्यम् । एवं निरूपिताः प्रमाणादिप्रसङ्गान्ताः सङ्क्षेपेण मीमांसाशास्त्रीयाः पदार्थाः ॥

इति तन्त्रसिद्धान्तरत्नावल्यां तृतीयपरिच्छेदे तन्त्रादिनिरूपणं नाम चतुर्थः प्रकाशः ॥

इति महामहोपाध्यायपण्डितसार्वभौमश्रीवेङ्कटसुब्रह्मण्यापरनामधेयश्रीचिन्नस्वामिशास्त्रिविरचितायां तन्त्रसिद्धान्तरत्नावल्यां तृतीयः परिच्छेदः ॥



अयमत्र शास्त्रसारः—"स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिस्तत्तद्वेदगतस्वकुलपरम्परागताया एकस्याश्शाखाया गुरुमुखोच्चारणानूच्चारणरूपाध्ययनसंस्कार्यत्वं विधत्ते । अनुपयुक्तस्य च संस्कारो निरर्थक इत्यध्ययनसंस्कृतस्य स्वाध्यायस्योपयोगापेक्षायामधीतेन स्वाध्यायेन फलवदर्थावबोधं भावयेदित्यर्थावबोधं प्रति विनियुज्यते स्वाध्यायः । अर्थज्ञाने फलवत्त्वं च स्वविषयीभूतयागाद्यनुष्ठानद्वारा स्वर्गपुत्रपशुभूत्यादिरूपफलजनकत्वम् । एवं चाऽध्ययनविधिना स्वाध्यायस्य सामान्यतः फलवदर्थावबोधनेऽवगते तत्तद्विशेषजिज्ञासायां विधिवाक्यानां फलजनकीभूततत्तत्क्रतुस्वरूपबोधनद्वारा, अर्थवादानां विहिततत्तत्क्रियास्तावकत्वेन, मन्त्राणामनुष्ठानकालिकतत्तत्क्रियाविषयकस्मृतिजनकत्वेन, नामधेयानां तत्तद्विधेयार्थपरिच्छेदकत्वेन, निषेधानामनिष्टजनकीभूततत्तत्क्रियास्वरूपावगमकत्वेन चेति विशेषे पर्यवस्थाप्यते ।

तत्र विधिवाक्येषु द्वे भावने अभिधीयेते—शाब्दी, आर्थी चेति। तत्र पुरुषप्रवृत्त्यनुकूलो व्यापारः शाब्दी भावना। पुरुषप्रवृत्तिरार्थी भावना। सा च शाब्द्यां भावनायां विषयतयाऽन्वयं भजन्ती स्वरूपतश्च विधातुमशक्या सती यादृशैर्यावद्भिरंशैः परिपूर्णा विधानयोग्या भवति तावद्भिरापूरणीयेति कल्प्यते। तदर्थं च तत्रोत्पन्नायां साध्याकाङ्क्षायां समानपदोपात्तमपि सा धात्वर्थमफलत्वादुज्झित्वा फलरूपं स्वर्गादिकं स्ववाक्योपात्तं भाव्यतया परिगृह्णाति। तदभावेऽर्थवादोपात्तम्। तस्याऽप्यभावे स्वतन्त्रतया कल्पितम्। ततश्च साधनापेक्षायां समानपदोपात्तं धात्वर्थमेव समर्थत्वात्स्वीकरोति साधनत्वेन। परन्तु तस्य क्रियारूपत्वेन क्षणिकत्वात्कालान्तरभावि स्वर्गादिकं प्रति साधनत्वं न संभवतीति तत्संपत्तये यागफलयोर्मध्ये फलोत्पत्तिपर्यन्तावस्थायि यागजन्यमपूर्वाख्यं किञ्चिद्वस्तु यागनिष्ठतया कल्प्यते—यागेनाऽपूर्वं कृत्वा फलं भावयेदिति। ततः कथं यागेनाऽपूर्वं संपाद्येतेतीतिकर्तव्यताकाङ्क्षा जायते। जातायां च तस्यां तत्प्रकरणपठितान्यङ्गजातानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यासहितेन विनियोगविधिनोपदेशरूपेण, श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्युपबृंहितेन प्रयोगविधिना, त्रिविधेन चाऽतिदेशेन, स्मृत्याचारसामर्थ्यवाक्यशेषादिना, बाधविकल्पाभ्युच्चयतन्त्रप्रसङ्गैश्च निवृत्त्यादिपुरस्सरं प्रापितानि जातिद्रव्यगुणक्रियारूपाणि साक्षात्परम्परया वाऽन्वयं भजन्ते। अङ्गानामपि क्रियारूपाणां क्षणिकानां स्वप्रधानोपकारकत्वं स्वरूपेण न सम्भवतीति तैरप्यपूर्वद्वारैव प्रधानोपकारकत्वं कल्प्यते। अतश्च स्वस्वापूर्वद्वारा तत्तदङ्गोपकृतप्रधानैस्तत्तदपूर्वद्वारा तानि तानि फलानि स्वर्गपुत्रपशुभूत्यादीनि सम्पादयेदिति काम्यस्थले कल्प्यते। नित्यनैमित्तिकस्थलयोस्तु तथोपकृतैरग्निहोत्रदर्शपूर्णमासादिभिस्स्वापूर्वद्वारा पापक्षयं भावयेदिति कल्प्यते। न च नित्यनैमित्तिकस्थलयोरकरणजन्यप्रत्यवायपरिहारमात्रं फलम्, न तु पापक्षयादिकमिति वाच्यम्। "**धर्मेण पाप-**

**मपनुदती**"ति श्रुत्या "**नित्यनैमित्तकैरेव कुर्वाणो दुरितक्षयम्**" इति वार्तिककारवचनाच्च तयोः पापक्षयार्थत्वावगमात्। अतः सर्वविशेषण-विशिष्टभावनावच्छेदकीभूतधात्वर्थरूपधर्मानुष्ठानद्वारा तत्तदधिकारी पुरुषस्तं तमभ्युदयं निःश्रेयसं फलं वा प्राप्नुयादिति विधिवाक्यार्थः। एवञ्च पुरुषस्य श्रेयस्साधनप्रतिपादनार्थमेव सर्वोऽप्ययं वैदिकस्य सपरिकरस्य विधेर्व्यापार इति ध्येयम् ॥

## विधित्रयनिरूपणम्

स चाऽयं विधिस्त्रिविधः—अपूर्वविधिः नियमविधिः परिसंख्याविधिश्चेति। तत्रैतद्विधिप्रवृत्तेः पूर्वं केनाऽपि प्रमाणेनाऽनवबोधितमर्थमपूर्वतया योऽवबोधयति **सोऽपूर्वविधिः**। यथा "**अग्निहोत्रं जुहोति**" "**व्रीहीन् प्रोक्षती**"त्यादिः। अत्रैतद्विधिप्रवृत्तेः पूर्वं न केनाऽपि प्रमाणेनाऽग्निहोत्रं प्रोक्षणं वा कर्तव्यतयाऽवगतम्। अतोऽपूर्वार्थावबोधकत्वादपूर्वविधिरित्युच्यते।

पक्षेऽप्राप्तमर्थं यः प्रापयति स **नियमविधिः**। यथा—"**व्रीहीनवहन्ति**" इत्यादिः। अत्रैतद्विध्यभावे यागे पुरोडाशविध्यन्यथाऽनुपपत्त्या तण्डुलनिष्पत्तावाक्षिप्तायां तत्साधनत्वेन लोके उलूखलमुसलसंयोगरूपव्यापारस्वरूपस्याऽवहननस्य प्राप्तिर्यद्यपि भवति, तथापि तत्समकालमेव वितुषीभावसाधनानां नखविदलनाश्मकुट्टनप्रस्थपृष्ठनिघर्षणादीनामनेकेषामपि प्राप्तिसंभवाद्युगपदनेकैर्वितुषीभावस्य कर्तुमशक्तेरेकदैकं साधनमन्यदाऽन्यदिति सर्वेषां साधनानां पाक्षिकी प्राप्तिर्भवतीति तन्मध्यपतितस्याऽवहननस्याऽपि कदाचित्प्राप्तिस्संभाविनी। परन्तु साधनान्तरप्राप्तिदशायामवहननं प्राप्तुं न शक्नोति। अतस्तस्मिन्पक्षे याऽवहननस्याऽप्राप्तिस्तां निवर्त्य प्रापणमनेन क्रियते—सर्वस्मिन्नपि पक्षेऽवहननमेव कुर्यादिति। अतोऽप्राप्तांशपूरको विधिर्नियमविधिरिति युक्तम्।

अत्र यद्यपि श्रौतोऽयं विधिर्लौकिकोपायप्रवृत्तेः पूर्वमेव प्रवृत्तस्सन्न-वहननं विदधातीति विधिप्रवृत्तिदशायां लौकिकसाधनानामनुपस्थितत्वाद-त्यन्ताप्राप्तप्रापकोऽयमपूर्वविधिरेव स्वरूपतो भवति, तथाऽप्येतद्विध्यभावे लोकतोऽवहननस्य साधनान्तरैस्सह पाक्षिक्येवाऽप्राप्तिर्भवतीति तादृशा-प्राप्तार्थप्रापणमेव विधेरस्य फलमिति फलमादायैव नियमविधिरिति व्यवहारः। अवघातस्य वितुषीभावादिकं दृष्टमेव फलम्। नियमस्य तु फलमदृष्टम्। अत एवं कल्प्यते—अवघातसंपादितवितुषीभावविशिष्टैरेव तण्डुलैः पिष्टादि-द्वारा चरुपुरोडाशादिकं सम्पाद्य तेन यागेऽनुष्ठिते ततोऽपूर्वमुत्पद्येत, नाऽन्यथेति। एवं मन्त्रविध्यादावपि द्रष्टव्यम्॥

एकस्मिन्नङ्गिन्युभयोरङ्गयोः, अङ्गिद्वये एकस्य वाऽङ्गस्य समुच्चित्य प्राप्तावितरनिवर्तको विधिः **परिसंख्याविधिः**। परिसंख्या वर्जनम्। परिसंपूर्वकस्य चक्षिञो वर्जनवाचकत्वात्। तद्बोधको विधिः परिसंख्या-विधिः। तत्राऽऽद्यस्योदाहरणं गृहमेधीयेष्टौ श्रुतम्—**"आज्यभागौ यजती"**ति। तत्रैकस्मिन्गृहमेधीयेऽङ्गिनि आज्यभागयोस्तदितरेषामङ्गानां च युगपत्प्राप्तौ सत्यामनेनाऽऽज्यभागाद्यतिरिक्तानां व्यावृत्तिः क्रियते। **"पञ्च पञ्चनखा भक्ष्या"** इति स्मार्तमुदाहरणम्। अत्र न पञ्चसंख्याकपञ्चनखभक्षणं विधीयते। भक्षणस्य रागत एव प्राप्तत्वात्। नाऽपि नियमः कल्प्यते, फलकल्पनापत्तेः। **"निवृत्तिस्तु महाफला"** इति मांसभक्षणनिवृत्तिबोधकशास्त्रविरोधाच्च। अतोऽनेन पञ्चनखभक्षणतदितर-भक्षणयोर्युगपत्प्राप्तौ सत्यां पञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तिरेव बोध्यते। अतश्च **"पञ्च पञ्चनखा भक्ष्या"** इत्यस्य वचनस्य पञ्चातिरिक्तपञ्चनखा अभक्ष्या इत्यर्थः पर्यवस्यति। अत एवेयं त्रिदोषा। दोषत्रयञ्च स्वार्थहानिः, परार्थस्वीकारः, प्राप्तबाधश्चेति। विधिशब्दघटितवाक्यस्य हि विधानं व्यपारः। स त्यज्यते। वर्जनबोधनं च नञ्घटितवाक्यस्य व्यापारः। सोऽनेन स्वीक्रियते। प्राप्तस्य पञ्चातिरिक्तपञ्चनखस्य बाधनं क्रियत इति।

इदं च दोषत्रयं शाब्द्यामेव परिसङ्ख्यायाम् । तत्राऽपि लाक्षणिक्यामेव, न तु श्रौतपरिसङ्ख्यास्थले "नाऽनृतं वदेदि"त्यादौ । तत्र शब्दशक्त्यैव निषेधबोधनात् । अतस्स्वार्थहानादिकं न तत्राऽस्ति ।

एवं फलतः परिसङ्ख्यायामपि न त्रैदोष्यम् । यथा **"इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते"** इत्यादौ । तत्राऽपि लिङ्गान्मन्त्रस्य रशनाद्वये प्राप्तेः पूर्वमेव प्रवृत्तेन विधिनाऽश्वाभिधान्यामेव मन्त्रविधानात्तत्र स्वार्थहान्यादेरभावात् । अतश्च यत्र निषेधबोधकशब्दाभावः, यत्र वा प्रमाणप्रवृत्तेः पूर्वमेव रागादिना विषयस्य प्रवृत्तिः तत्रैव त्रैदोष्यम्, नेतरत्रेति बोध्यम् ।

द्वितीयस्योदाहरणम्—**"इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त"** इत्येतदेव । अत्र ह्येकस्याऽङ्गस्य मन्त्रस्याऽश्वगर्दभरशनाद्वये युगपत्प्राप्तौ सत्यां गर्दभरशनातो मन्त्रस्य निवृत्तिरनेन क्रियते । अत्राऽपि स्वरूपतोऽपूर्वविधित्वेऽपि फलतः परिसङ्ख्याविधित्वमवहनननियमविधिवदेव बोध्यम् । लिङ्गात्पूर्वं प्रवृत्तेनाऽनेन विधिनाऽश्वाभिधान्यामेव मन्त्रस्य विनियोगात् । परन्त्वेतद्विध्यभावे लिङ्गादुभयत्र मन्त्रः प्राप्नुयात् । अतो गर्दभरशनातो मन्त्रनिवृत्तिफलकोऽयं विधिः फलत एव परिसंख्याविधिः । सर्वमिदं मनसि निधाय विधित्रयलक्षणमुक्तं मन्त्राधिकरणे *वार्तिककारेण*—

**"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।**
**तत्र चाऽन्यत्र च प्राप्ते परिसङ्ख्येति गीयते"** ॥ इति ।

कारिकाया अस्या अर्थो न्यायप्रकाशव्याख्यायां सारविवेचिन्यामस्माभिर्विस्तरशस्सोदाहरणं निरूपित इति तत एवाऽवगन्तव्यः । विस्तरभयान्नेह प्रपञ्च्यते । ततोऽप्यधिकमवजिगमिषुभिः श्रीकण्ठावतारैस्सर्वविद्यानिधानभूतैः श्रीमदप्पय्यदीक्षितेन्द्रैर्विरचिते विधिरसायने परिश्रमः कार्यः ।

ननु नियमस्थलेऽपि साधनान्तरनिवृत्तिः परिसंख्यास्थलेऽपि सैवेत्युभयत्र निवृत्तेस्तुल्यत्वान्नियमपरिसंख्ययोः को विशेष इति चेत्—अयं भेदः—नियमस्थले वचनस्य न निवृत्तौ तात्पर्यम्, किन्त्वप्राप्तांशपूरणे। अप्राप्तेंऽशे प्रापित इतरदर्थान्निवर्तते। न तत्र शब्दस्य व्यापारः। परिसंख्यायां तु निवृत्तिरेव शब्दतात्पर्यविषयीभूता। अतो नियमविधिर्भावविषयकः, परिसंख्याविधिर्वर्जनरूपाभावविषयक इति ॥

इति तन्त्रसिद्धान्तरत्नावल्यां चतुर्थपरिच्छेदे विधित्रयनिरूपणं नाम प्रथमः प्रकाशः ॥

---

## मोक्षस्वरूपनिरूपणम्

एतादृशश्रेयस्साधनबोधनार्थं प्रवृत्तविधिविषयतया प्रतीयमानं श्रेयो द्विविधम्—अभ्युदयो निःश्रेयसं चेति। तत्र स्वर्गपुत्रपश्वादिजन्यं सुखमभ्युदयः। निःश्रेयसन्तु मोक्ष एव। स च प्रपञ्चसम्बन्धविलयरूपः, न तु प्रपञ्चविलय एव। मीमांसकमते प्रपञ्चस्य परमार्थत्वाभ्युपगमात्। श्रुतिस्मृत्यादिपर्यालोचनया तस्य सत्यत्वावगमात्। अत एव "यत्र त्वस्य सर्वमात्मैवाऽभूत्" "आत्मा वा इदं सर्वम्" "यत्र हि द्वैतमिव भवति" इत्यादीनि द्वैतनिषेधपराणि वचनान्यौपचारिकतया नेयानि। यथा हि स्वाप्निकः प्रपञ्चो मृगतृष्णेन्द्रजालादिश्च भ्रान्त्या परिकल्पितः कियन्तञ्चन कालं दृष्टिगोचरीभूय पश्चाद्विलीनो भवति, तथाऽयमपि शरीरेन्द्रियविषयादिरूपः प्रपञ्चः कियन्तञ्चन कालमात्मन उपभोग्यतां भजन् पश्चाद्विनाशादनुपभोग्यो भवतीत्यनेनैव सादृश्येन भ्रान्तिरित्युपचारेणोच्यते पुरुषाणां विषयोपभोगेष्वास्थां निवर्तयितुं तद्द्वारा मुक्तावभिरुचिमुत्पादयितुञ्च। अतो नाऽनेन प्रपञ्चस्य मिथ्याज्ञानजन्यत्वं बोधयितुं शक्यते, येन तस्याऽऽत्यन्तिको विलय आशङ्क्येताऽपि। किन्तु प्रपञ्चस्य

स्वसम्बन्धविलय एव। त्रेधा हि पुरुषस्य प्रपञ्चेन सह सम्बन्धः शरीरेण, इन्द्रियेण, विषयैश्च। भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोग्याः शब्दरसादयो विषयाः। **भोगो** नाम सुखदुःखादिविषयकोऽपरोक्षानुभवः। एतैः पुरुषो बध्यते। स एव बन्धस्संसार इत्युच्यते। त्रयाणामेषामात्यन्तिकनिवृत्तिरेव मोक्षः। आत्यन्तिकत्वञ्च पूर्वोत्पन्नानां शरिरेन्द्रियविषयाणां विनाशः। नूतनानामनुत्पत्तिः। ताभ्याञ्च सुखदुःखोच्छेदः। तदुच्छेदश्च धर्माधर्मोच्छेदात्। धर्माधर्मोच्छेदश्चोत्पन्नानां धर्माणां फलोपभोगेनाऽधर्माणां नित्यनैमित्तिककर्मानुष्ठानेनोभयेषामात्मज्ञानेन च भवति। उत्पाद्येषु तेषु काम्यानामनुष्ठानेन प्रतिषिद्धाकरणेन चाऽनुत्पादात् नित्यनैमित्तिकमात्रकरणेन प्रत्यवायपरिहारात् असति शरीराद्यारम्भके हेतौ पूर्वशरीरनिपाते चाऽशरीरोऽवस्थितो भवति। स एव मुक्त इत्युच्यते। अतो मोक्षार्थिभिस्तथैव यतितव्यम्। न ह्यात्मज्ञानमात्रादेतादृशो मोक्षो लब्धुं शक्यते। आत्मज्ञानस्य कर्मप्रवृत्तौ पुरुषस्य रुच्युत्पादनफलत्वात्। मोक्षस्तु पूर्वोक्तेनैव हेतुना। यथोक्तं *वार्तिककारैः*—

**"आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम्।**
**कर्मप्रवृत्तियोग्यत्वमात्मज्ञानस्य लक्ष्यते"** ॥ इति ॥

**"आत्मा वाऽरे द्रष्टव्यः" "अविनाशी वाऽरेऽयमात्मा"** इत्यादिना प्रतिपादितमात्मज्ञानं हि संयोगपृथक्त्वन्यायेन क्रत्वर्थं पुरुषार्थञ्च। क्रत्वर्थता तावदग्निहोत्रादिकर्तुरात्मनो नित्यत्वाविनाशित्वादिप्रतिपादनद्वारा पुरुषाणां कर्मसु प्रवृत्तिजननमात्रौपयिकत्वम्। तेन विना पारलौकिकेषु फलेषु तेषां प्रवृत्तिनिवृत्त्यनुदयात्। पुरुषार्थता तावत्परम्परया मोक्षोपकारकत्वम्। यो हि देहाद्विमुक्तमात्मानमजरममरं दुःखातीतं जानाति तस्य देहसम्बन्धविरक्तस्य तत्सम्बद्धेषु कर्मस्वौदासीन्ये जाते पूर्वकृतानां कर्मणां फलभोगेन क्षयात्तन्निमित्ते शरीरे पतितेऽनागतानां तेषामननुष्ठानादेवाऽ-

सत्वाद्देहान्तरानुत्पत्तेरशरीरेणैवाऽवस्थितो भवति। सैवाऽवस्था मोक्ष इत्युच्यते। अतो मोक्षार्थिभिर्विवेकज्ञानमात्रेण न कृतार्थंमन्यमानैस्स्थातव्यम्, किन्तु पूर्वोक्तरीत्याऽशरीरत्वसम्पादने यतितव्यमिति। तदुक्तं *श्लोकवार्तिके*—

"मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया॥

तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये।
उत्तरप्रचयाभावाद्देहो नोत्पद्यते पुनः॥

कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते।
तदभावे न कश्चिद्धि हेतुस्तत्राऽवतिष्ठते॥

तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते।"

इत्यलं बहूक्त्या, सूरिभिः पराक्रान्तत्वादित्युपरम्यत इति॥

इति तन्त्रसिद्धान्तरत्नावल्यां चतुर्थपरिच्छेदे मोक्षस्वरूपनिरूपणं नाम द्वितीयः प्रकाशः॥

---

वसुधाखनभोनेत्र (२००१) मिते वैक्रमवत्सरे।
माघे दशम्यां शुक्लायां दिवा क्षितिजवासरे॥ १॥

स्वावासे हनुमद्धट्टे भागीरथ्याः परीसरे।
पूर्णतां तन्त्रसिद्धान्तरत्नावलिरगादियम्॥ २॥

योऽसौ कारितवानेतां कृतिमन्तर्मम स्थितः।
सश्रद्धमर्पये तस्मिन्विश्वेशेऽम्लानमालिकाम्॥ ३॥

गुणयुतमगुणं वा ग्रन्थमेनं विलोक्य
प्रभव इह बुधेन्द्राः श्लाघने दूषणे वा ।
परमुरुगुणवन्द्यान् प्रार्थये प्राज्ञवर्यान्
प्रथममनवद्दृष्ट्या वीक्ष्यतां ग्रन्थ एषः ॥ ४ ॥

इति तन्त्रसिद्धान्तरत्नावल्यां चतुर्थः परिच्छेदः ॥

इति श्रीवेदवेदाङ्गपारदृश्ववैदिकसार्वभौमवाधूलवंशमुक्ताफल-
श्रीरघुनाथतनुजन्मना श्रीमदन्नपूर्णागर्भसम्भूतेन
महामहोपाध्याय,शास्त्ररत्नाकर, पण्डित-
सार्वभौम, मीमांसाकेसरिश्रीवेङ्कट-
सुब्रह्मण्यशर्मणा श्रीचिन्नस्वामि-
शास्त्रिसमाह्वयेन विरचिता
तन्त्रसिद्धान्तरत्नाव-
लिस्समाप्ता ॥



## परिशिष्टम्

# भट्टप्रभाकरमतभेदप्रदर्शनम्

प्रमाणविषये भाट्टैस्स्वीकृतानां प्रमाणानां स्वरूपं निरूप्यते। एतैश्च षट् प्रमाणानि स्वीकृतानि—प्रत्यक्षमनुमानं, शब्दः, उपमानमर्थापत्तिरनुपलब्धिरिति। अत्राऽयं सङ्ग्रहश्लोकः—

'चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ
भासर्वज्ञश्च सांख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति।
प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः
षट्कं पौराणिकास्त्वष्टकमभिदधिरे सम्भवैतिह्ययोगात्'॥ इति।

## प्रत्यक्षलक्षणम्, इन्द्रियाणि च

**कुमारिलमते**—तत्र प्रत्यक्षं नाम पदार्थैस्साक्षादिन्द्रियाणां सन्निकर्षे सति जायमानं ज्ञानमुच्यते। प्रत्यक्षज्ञानकारणभूतानि घ्राणरसनचक्षुस्त्वक्श्रोत्राणि मनश्चेति षडिन्द्रियाणि। यत्संप्रयुक्तेऽर्थे विशदावभासं विज्ञानं जनयति तदिन्द्रियमित्युच्यते। तत्र चक्षुर्नाम कनीनिकान्तर्गतं तेजः। जिह्वाग्रगस्तोयांशो रसनम्। गन्धग्राहकमिन्द्रियं पार्थिवं घ्राणमित्युच्यते। स्पर्शोपलम्भकस्य त्वगिन्द्रियस्य वायवीयत्वम्। 'दिशः श्रोत्रमि' त्यध्रिगुप्रैषगताल्लिङ्गाद्दिग्भाग एव कर्णशष्कुल्यवच्छिन्नः श्रोत्रमुच्यते। सुखाद्यापरोक्ष्यसाधनेन्द्रियत्वेन कल्प्यमन्तरिन्द्रियं मनः। एतेषाञ्च चक्षुरादीनामनुद्भूतरूपस्पर्शत्वात्प्रत्यक्षेण न ग्रहणमिति सिद्धमिन्द्रियत्वम्।

**प्राभाकरमते**—प्राभाकराणामनुपलब्धिं विहाय पञ्चैव प्रामाण्याभिमतानि। तत्र 'साक्षात्प्रतीतिः प्रत्यक्षम्' इति प्रत्यक्षलक्षणम्। तच्च प्रत्यक्षं मेयमातृप्रमास्विति त्रिपुटं भवति। मेयेषु द्रव्यजातिगुणेषु सा प्रत्यक्षा प्रतीतिरिन्द्रियसंयोगेनोत्पद्यते।

इन्द्रियाणि पूर्वोक्तान्येव। तेषां स्वरूपमपि पूर्ववदेव। श्रोत्रस्य परं कर्णशष्कुल्यवच्छिन्नाकाशत्वमेव।

## सन्निकर्षाः

**कुमारिलमते**—सन्निकर्षविषये नैयायिकाभिप्रेतेषु संयोगस्संयुक्तसमवायस्संयुक्तसमवेतसमवायस्समवायस्समवेतसमवायो विशेषणविशेष्यभाव इति षट्सु सन्निकर्षेषु प्राथमिकांस्त्रीनेव समवायस्थाने तादात्म्यमिति व्यवहरन्तो भाट्टा अङ्गीकुर्वन्ति। एतन्मते श्रोत्रस्य दिगात्मकत्वात् शब्दस्य च द्रव्यत्वेन संयोगरूपसन्निकर्षस्यैव सम्भवात् न समवायसम्बन्धाङ्गीकारस्याऽऽवश्यकता। एवं शब्दवृत्तिसामान्यस्य संयुक्ततादात्म्येनैव ग्रहणसम्भवेन न समवेतसमवायोऽप्यावश्यकः। तथाऽभावपदार्थस्याऽनुपलब्धिरूपप्रमाणान्तरविषयस्य प्रत्यक्षज्ञानाभावेन तदर्थं सन्निकर्षो नाऽपेक्ष्यत इति विशेषणविशेष्यभावरूपस्सन्निकर्षोऽप्येतन्मते नाऽभ्युपगम्यते। अतस्संयोगः, संयुक्ततादात्म्यम्, संयुक्ततादात्म्यतादात्म्यं चेति त्रयस्सन्निकर्षाः। एवञ्च षडिन्द्रियात्मकं त्रिसन्निकर्षमेतन्मते प्रत्यक्षप्रमाणमिति सिद्धम्।

## प्रत्यक्षविभागः

तच्च प्रत्यक्षं नैयायिकवन्निर्विकल्पकं सविकल्पकञ्चेति द्विविधम्। तत्र प्रकारताविशेष्यतादिविषयतारहितं ज्ञानं निर्विकल्पकम्। सविकल्पकन्तु सविशेष्यकं सप्रकारकं ससंसर्गकं वा ज्ञानमुच्यते। तच्च 'गौरयम्' दण्ड्ययम्, शुक्लोऽयम्, गच्छत्ययम्, डित्थोऽयमि' ति जातिद्रव्यगुणक्रियानामविषयकतया पञ्चधा भवति। चाक्षुषादिभेदेन च षोढा। प्रत्यक्षमात्रं प्रति महत्त्वस्य कारणत्वं स्वीक्रियते। चाक्षुषप्रत्यक्ष एवोद्भूतरूपं कारणम्, स्पार्शने चोद्भूतस्पर्शः, न तु रूपमप्यत्र कारणम्। तेन वायुरमीषां मते त्वाचप्रत्यक्षविषय इति सिध्यति।

**प्राभाकरमते**—सन्निकर्षविषये संयोगः, संयुक्तसमवायः, समवाय इति त्रेधा सन्निकर्षमाहुः। एतन्मते रूपत्वादीनां निराकरणात् संयुक्तसमवेतसमवायो नाऽऽश्रयणीयः। शब्दत्वस्याऽप्यभावात्समवेतसमवायोऽपि नाऽङ्गीकर्तव्यः। अभावस्याऽप्यभावात् समवायस्य च प्रत्यक्षत्वाभावाद्विशेषणविशेष्यभावोऽपि नाऽभ्युपगन्तव्य इति विशेषः। अन्यच्च प्रत्यक्षविभागादिकं पूर्ववदेव।

## अनुमानलक्षणं तद्विभागश्च

कुमारिलमते—व्याप्यदर्शनादसन्निकृष्टार्थविज्ञानमनुमानम् । यथा—पर्वते धूमवत्त्वदर्शनादग्निमत्त्वज्ञानम् । तदिदमनुमानं त्रिविधिम्—अन्वय-व्यतिरेकि केवलान्वयि केवलव्यतिरेकीति नैयायिकाः प्रतिपन्नाः । तत्र केवलव्यतिरेक्यनुमानमिमे नाऽभ्युपगच्छन्ति । अयमेषामाशयः—अत्र हि प्रकृतपक्षादन्यत्राऽप्रसिद्धस्यैव पदार्थस्य साध्यत्वं वक्तव्यम् । एतस्मिंश्चाऽनुज्ञायमानेऽदृष्टाद्यलौकिकार्थानामप्यनुमानविषयत्वं प्रसज्येतेति ।

## अवयवविचारः

तत्र परार्थानुमानवाक्यं पञ्चावयवमिति तर्करसिकाः—प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति । एषु त्रयाणामेवाऽऽवश्यकतेति भाट्टाः प्रतियन्ति—प्रतिज्ञाहेतूदाहरणानां वा उदाहरणोपनयनिगमनानां वा । तत्राऽऽद्यपक्षे प्रतिज्ञाहेतूदाहरणैरेव धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतो वह्निव्याप्यधूमवन्महानससदृश इति वाक्यार्थज्ञानादनुमितिजननादुपनय-निगमने व्यर्थे । द्वितीयपक्षे चोदाहरणप्रभृतिभिरेव साध्यसिद्धेः प्रतिज्ञाहेतू व्यर्थावित्येषां तात्पर्यम् ।

## अनुमानदोषाः

तथा हेत्वाभासा अपि त्रय एवाऽत्राऽभिमताः—असिद्धोऽनैका-न्तिको बाधकश्च विरुद्धापरपर्याय इति । अनुमितिकारणीभूताभावप्रति-योगियथार्थज्ञानप्रकारो हेतुनिष्ठदोषो हेत्वाभास इत्युच्यते । तत्राऽ-सिद्धिः—स्वरूपासिद्धिः, सम्बन्धासिद्धिः, व्यतिरेकासिद्धिः, आश्रयासिद्धिः, व्याप्यत्वासिद्धिश्चेति पञ्चधा भवति । अनैकान्तिकस्य साध्यसंशयजन-कतया दूषकत्वम् । स च द्विधा—सव्यभिचारस्सप्रतिसाधनश्च । यत्तु नैयायिकास्साधारणासाधारणानुपसंहारिभेदेनानैकान्तिकं त्रेधा भिन्नमभि-दधति, तत्र साधारण एव केवलं सव्यभिचारपदाभिधानार्हः अनैकान्ति-कान्तर्भूतः, असाधारणस्त्वसिद्धविशेष एव । तदिदं सर्वं पार्थसारथिमि-श्रैस्तर्कपादे सम्यगुपपादितम् । एवमेते त्रयः यथासम्भवमवान्तरविभा-गवन्तो हेतुदोषाः । बाधश्च प्रतिज्ञादोषः । सोऽयं साध्यस्य प्रमाणान्तरेण परिच्छेदे, तदभावस्य तथाभावे, साध्यस्यैवाऽप्रसिद्धावपि वा भवतीति

त्रेधा। एवमुदाहरणदोषा अपि साध्यवैकल्यसाधनवैकल्योभयवैकल्याश्रयहीनत्वादयो भवन्ति।

**प्राभाकरमते**—महानसादौ वह्निधूमयोर्नियमग्रहणावसरे ये ये पदार्था गृहीताः, त एवाऽनुमानेनाऽपि गृह्यन्त इति स्वीकुर्वाणा अपि प्राभाकराः, तस्य संस्कारमात्रजन्यत्वाभावादनुभूतित्वाच्च पृथक्प्रामाण्यमभ्युपगच्छन्तीति पूर्वमतापेक्षया विशेषः। अन्यत्सर्वं पूर्ववत्।

## शब्दपरिच्छेदः अभिहितान्वयवादः

**कुमारिलमते**—अनुमानप्रमाणनिरूपणानन्तरमुपमानं निरूपयन्ति नैयायिकाः। भाट्टास्तु वादिपरिग्रहभूम्ना शब्दं पुरस्कुर्वन्ति। तत्र ज्ञातैः पदैः पदार्थस्मरणे कृतेऽसन्निकृष्टवाक्यार्थज्ञानं यत् तच्छाब्दमितीर्यते। तदिदं शाब्दज्ञानं व्युत्पत्तिमूलकमिति प्रथमतस्तत्प्रकारं विवेचयामः—

बालो हि 'गामानय, पुत्रस्ते जातः' इत्युत्तमवृद्धवाक्यश्रवणानन्तरं प्रवृत्तिं हर्षादिकं वा कस्यचिन्मध्यमवृद्धस्योपलभ्य तयोर्बुद्धिपूर्वकत्वाद्गवानयनपुत्रजननाद्यर्थबुध्यनन्तरमेवाऽस्य प्रवृत्तिहर्षादिकं जातमिति बुध्यमानः, तादृशार्थबुद्धेश्च शब्दानन्तरमेव जातत्वाद्गामानयेत्यादिशब्दस्य गवानयनाद्यर्थबोधकत्वमवबुध्यते। तस्मिन्नवसरे पिण्डितस्यैवाऽर्थस्य बोधकतया ज्ञातशब्दः। ततश्च 'गां बधान' 'अश्वमानये' त्यादिद्वितीयप्रयोगे पदान्तरयोगत्यागरूपावापोद्वापाववलोक्य गोशब्दस्सास्नादिमतो वाचकः, आनयनशब्दः आनयनक्रियावाचक इत्यादिपदार्थविवेकमवधारयति। एवं पदार्थज्ञाने स्थिते यत्पुनस्तदनन्तरमेकविशिष्टार्थज्ञानरूपं वाक्यार्थज्ञानं जायते तत्र तार्किकादय एवमाशेरते—पदानां पदार्थबोधोपक्षीणत्वात् पदार्था एव स्वसंसर्गरूपं वाक्यार्थमवबोधयन्तीति। भाट्टाः पुनः पदार्था लक्षणयैव वाक्यार्थं बोधयन्तीति ब्रुवते। वाच्यार्थानुपपत्त्या खलु लक्षणा भवति। अत्र च पदैः स्मर्यमाणा गवादिपदार्थाः यद्यन्योन्यान्वयं विना सामान्यरूपा एवाऽवतिष्ठेरन्, तर्हि पदानां व्युत्पत्तिसमयावधृतमेकविशिष्टार्थबोधतात्पर्यं विरुध्येतेति सामान्यरूपस्य वाच्यस्याऽनुपपत्तेरन्योन्यान्वयरूपे विशेष एव पदार्थाः पर्यवस्यन्ति। ततश्च गौरानीयमानैव, आनयनञ्च गोसम्बद्धमेवेति परस्परान्वयलाभात् गवान-

यनरूपवाक्यार्थसिद्धिः। तेन पदाभिहिताः पदार्था एव मिथोऽन्वयं यान्तीति 'अभिहितान्वयवादिनो भाट्टाः' इति व्यवह्रियन्ते।

**प्राभाकरमते**—शब्दविज्ञानापेक्षादात्ममनस्सन्निकर्षात् यददृष्टार्थविषयं ज्ञानं तच्छास्त्रं नाम प्रमाणम्। अत्र शब्दव्युत्पत्तिमधिकृत्य पदार्थेषु तत्तत्पदैरभिहितेषु तेषां परस्परान्वयरूपे वाक्यार्थे पुनर्लक्षणा भट्टमत इति तदनुसारिणोऽभिहितान्वयवादिनो भवन्तीति पूर्वं प्रतिपादितम्। प्राभाकराः पुनस्तादृशान्वयस्याऽपि तादृशपदार्थविशेषणतया शक्यत्वं पदवाच्यत्वं चेत्यङ्गीकुर्वन्तोऽन्विताभिधानवादिनो भवन्ति। तथाहि—गामानयेति प्रथमश्रवणे हि गवानयनरूपस्याऽन्वितस्यैवाऽर्थस्य शब्दो बोधकतया ज्ञातः। अतस्तदनुसारेण पुनरपि पदानामेवाऽन्वितार्थबोधकत्वं वाच्यम्, न तु पदार्थानाम्। आवापोद्वापाभ्यां हि पदार्थेषु विविच्यमानेष्वपि तत्र तत्र तैस्तैरन्विता एव पदार्था दृष्टाः, न त्वेकाकिन इत्यन्विते स्वार्थे पदानां शक्तिर्न परित्यज्यते। अतः पदाभिधेय एवाऽन्वितरूपो वाक्यार्थः, न तु पदार्थगम्यः।

## शब्दार्थविचारः

**कुमारिलमते**—शब्दन्त्वधिकृत्य मीमांसका नित्य इति ब्रुवते। वृत्तिस्तु शक्तिर्लक्षणा गौणीति त्रिविधा। तत्राऽव्यवधानेन शब्दजन्यप्रतीत्यनुकूला वृत्तिश्शक्तिः। सा च न नैयायिकानामिव 'अस्माच्छब्दादयमर्थो बोद्धव्य' इतीश्वरेच्छा रूपा, किन्तु पदार्थान्तरमिति मीमांसकाः। अस्या एव सङ्केत इति व्यवहारः। तद्ग्रहश्च व्याकरणादिभिः। शक्यसम्बन्धो लक्षणा। सा च जहत्स्वार्था, अजहत्स्वार्था चेति द्विविधा। तत्र स्वशक्यार्थाविशेष्यकान्वयबोधप्रयोजिका जहत्स्वार्था। यथा गङ्गायां घोष इत्यादौ। स्वशक्यार्थविशेष्यकान्वयबोधप्रयोजिका अजहत्स्वार्था। यथा—यष्टीः प्रवेशयेत्यादौ। इयमेवोपादानलक्षणेत्यालङ्कारिकाः। तद्बीजन्तु शक्यार्थान्वयानुपपत्तिः, न तु तात्पर्यानुपपत्तिरपि, वेदे तदसम्भवादिति केचन मीमांसका आशेरते। अन्ये च वेदे पुरुषाभावेऽपि शब्दस्यैव तात्पर्यादिकं स्वीकृत्य तदनुपपत्तिरेव लक्षणाया बीजमित्यभिप्रयन्ति। स्वशक्यसम्बन्धिगुणसजातीयगुणवदुपस्थितिहेतुवृत्तिर्गौणी। गौणीवृत्तिबोधकानि प्रमाणानि 'तत्सिद्धिः' जातिः, सारूप्यम्, प्रशंसा, भूमा, लिङ्गसमवयः'

इति षट्। शब्दार्थः पुनः जातिरखण्डोपाधिर्वा, न तु व्यक्तिः, नाऽपि जातिविशिष्टा व्यक्तिः। यौगिकपदानां द्रव्यमर्थः। धातूनां यत्नातिरिक्तो व्यापारोऽर्थः। आख्यातस्य दशलकारसाधारणस्य यत्नरूपा आर्थभावनेति विवेकः।

तदिदं शाब्दं द्विविधम्—पौरुषेयमपौरुषेयमिति। तत्राऽऽद्यः प्रकारः लोके आप्तवाक्यम्, द्वितीयस्तु अपौरुषेयं वेदवचः। तदेवं लौकिकं वैदिकमपि शाब्दं प्रमाणं सिद्धम्। वैदिकञ्च विधिमन्त्रार्थवादभेदेनोपदेशातिदेशभेदेन च बहुविधम्।

**प्राभाकरमते**—तदिदं शास्त्रं पौरुषेयमपौरुषेयमिति द्वेधा विभज्य तत्र पौरुषेयं लोके आप्तवाक्यमिति कौमारिलानां मतम्। तत्र प्राभाकरा अन्यथा मन्यन्ते—लौकिकवाक्यानां नैव प्रामाण्यम्। प्रमाणशब्दस्तु वेदात्मकोऽपौरुषेय एव। पुरुषवचनानि तु वक्त्रभिप्रायानुमापकान्येव न स्वयमेव वाक्यार्थं बोधयन्ति, यतश्च पुरुषाधीनरचनं लौकिकं वाक्यमयथार्थशङ्काकुण्ठितशक्तिकं परिदृश्यते। व्युत्पत्तिसमयसिद्धाऽपि शब्दानां बोधकत्वशक्तिर्व्यभिचारभूयिष्ठेषु पौरुषेयवचनेषु तदाशङ्काशङ्कया कुण्ठिता भवति। केचित्तावद्भ्रमेणैवाऽनन्वितवादिनः, अपरे चाऽऽशयदोषतः, अन्ये प्रमादात्, केऽप्यशक्तेश्च परिदृश्यन्ते। एतादृशदोषदूषितपुरुषोक्तानां पदार्थानां कथमन्वययोग्यता प्रतीयताम्? सति चैवं यावदनेन वक्त्रा अमुमर्थमवबुध्यैव वाक्यं प्रयुक्तमिति नाऽनुमीयते, तावदन्यथात्वशङ्का न निवर्तत इति वाक्यमुदास्त एव। तस्माद्वक्तृधीस्तावदनुमातव्या। तत्र 'नद्यास्तीरे पञ्च फलानि सन्ती' ति वाक्ये श्रुते पदार्थेषु च पृथक्पृथक् स्मृतेष्वनुमानमेवमुदेति—'एतानि पदानि एतेषां पदार्थानां संसर्गमवबुध्यैव प्रयुक्तानि, आप्तप्रणीतपदत्वात्, गामानयेति पदवदि' ति। एवञ्च वक्तुः पदार्थसंसर्गज्ञानमवगन्तुं परिश्रान्तः श्रोता पदार्थसंसर्गरूपं वाक्यार्थमपि बलाल्लभत इत्यनुमेय एव नरवचस्सु वाक्यार्थ इति।

एतावता प्रबन्धजातेनेदमत्र निर्गलितम्—यद्वेशब्दो लौकिकशब्दश्चेत्युभयं प्रमाणं भाट्टानां, प्राभाकराणान्तु एकस्य पृथक्प्रामाण्यम्, अपरस्याऽनुमानत्वञ्चेति।

## लिङर्थविचारः

कुमारिलमते—अत्र लोके वेदे वा लिङादिप्रत्ययानां विधिरर्थः । तत्र मण्डनमिश्रास्तावल्लोकवेदसाधारण्येनेष्टसाधनत्वमेव लिङर्थ इत्यभ्युपगच्छन्ति, यतश्च पुरुषाणां तत्र तत्रेष्टसाधनताज्ञानमेव प्रवृत्तिहेतुः परिदृश्यते ।

पार्थसारथिमिश्राः—नियोगो विध्यर्थः, इष्टसाधनत्वमेव तत्वेन रूपेण विध्यर्थः, तत्तद्धात्वर्थगतं कार्यत्वं लिङर्थः, अभिधाख्यो व्यापारः शब्दगतो लिङर्थ इति मतचतुष्टयमुपपाद्य, नियोगविध्यर्थत्वं प्राभाकराभिमतं खण्डयित्वा, तृतीयचतुर्थयोर्मतयोर्वार्तिकाननुसारितां प्रदर्श्य 'न्यायविदां त्विष्टसाधनत्वमेवाभिमतम् । न च संविद्विरोधः, तेन रूपेणाऽभिधानाभावात् । प्रवर्तनारूपेण तु शब्दोऽभिधत्ते प्रवृत्तिहेतुश्च धर्मः प्रवर्तना । सा चाऽपौरुषेये वेदे प्रैषादीनामभावात्पारिशेष्यादिष्टाभ्युपायतैव निश्चीयत' इत्यादिना इष्टसाधनत्वस्यैव लिङर्थत्वं प्रत्यपादयन्न्यायायरत्नमालायाम् ।

भट्टसोमेश्वरखण्डदेवप्रभृतयस्तु—लोके सर्वोऽपि प्रवर्तकः 'अहमेनमस्मिन् कर्मणि प्रवर्तयामी' त्याशयं हृदि निधाय लिङादिघटितं वाक्यमुच्चारयति । प्रवर्तमानोऽपि पुरुषः 'अनेनाऽहमस्मिन् कर्मणि प्रवर्तितः' इत्यवगच्छतीति सर्वस्वसंवेद्यम् । अवगम्य च प्रवर्तयितृपुरुषेच्छारूपां प्रवर्तनामिच्छाविषये कर्मणि इष्टसाधनत्वादिकमनुमिनोतीत्यपि सर्वस्वसंवेद्यम् । यदि चेष्टसाधनत्वमेव विध्यर्थः, तर्हि किमिति तदनुमाने पुरुषः प्रवर्तताम् । अत इष्टसाधनत्वाद्यतिरिक्तः प्रवर्तनाख्योऽलौकिकः कश्चिद्धर्मविशेषो लिङादिवाच्य इत्यभिप्रयन्ति ।

प्राभाकरमते—पूर्वन्तावद्दशलकारसाधारणस्याऽऽख्यातस्य यत्नरूपाऽर्थभावना, लिङादीनाञ्च विधिप्रत्ययानामिष्टसाधनत्वाद्यतिरिक्तः प्रवर्तनाख्योऽलौकिकः कश्चन धर्मविशेषोऽर्थ इति कौमारिलमतमभिहितम् । अत्र प्राभाकरा लिङ्स्थले केवलमाख्यातस्य कृतिरर्थः, न तु सर्वलकारस्थल इत्यभिप्रयन्ति । तथा लिङादिविधिप्रत्ययानामपूर्वापरपर्यायः कार्यात्मा नियोगोऽर्थः । तत्राऽपि लोके कार्यत्वेन क्रियायाः वेदे च नियोगस्य लिङर्थत्वमिति विवेकः । विशेषेण चैतन्मतं अस्मत्पूज्यपादैः श्रीगुरुचरणैर्विधितत्वसङ्ग्रहे निरूपितम् ।

# उपमानम् , अर्थापत्तिश्च

**कुमारिलमते**—पूर्वदृष्टेऽर्थे स्मर्यमाणे दृश्यमानार्थसादृश्यज्ञानमुपमानम्। यथा गवये गोसादृश्यदर्शनानन्तरं स्मर्यमाणे गवि गवयसादृश्यज्ञानम्। अत्र नैयायिकाः उपमानं प्रमाणमङ्गीकुर्वन्तः तस्य शब्दार्थव्युत्पत्तिफलकतामध्यवस्यन्ति। भाट्टास्तु तदिदं प्रमाणमभ्युपयन्तोऽपि तत्र पराभिमतशब्दार्थव्युत्पत्तिमन्यथा निर्वहन्तोऽनुभूतपूर्वपदार्थसदृशस्य वस्त्वन्तरस्य प्रत्यक्षे सति यदनुभूतपूर्वस्य वस्तुनः प्रत्यक्षीक्रियमाणवस्तुसादृश्यतया ज्ञानं जायते तदुपमानफलं वर्णयन्ति। एवं वर्णयतां फलमिदमेषां सिध्यति—यत्र विकृतावङ्गानि न विशिष्य समाम्नातानि, तत्राऽङ्गप्राप्तये प्रकृत्युपदिष्टाङ्गानां नियमेनोपस्थितिः प्रतिपादयितव्या। यदि तत्समानधर्मदर्शनजनितं स्मृतिमात्रं भवेत्, तर्हि यथाकथञ्चित्स्मृतस्य कर्मणोऽङ्गानि विकृतौ कर्तव्यानीत्यत्र निश्चितप्रमाणाभावेनाऽनाश्वासो भवेत्। अतश्च विकृतिपर्यालोचनसमये प्रकृत्यवगमः परिनिश्चितप्रमाणविशेषाधीनोऽनुभवरूपस्स्थाप्यत इति।

मीमांसकानामर्थापत्तिर्नाम पञ्चमं प्रमाणमभिमतम्। प्रत्यक्षेण शब्देन प्रमितस्याऽर्थस्योपपादकार्थान्तरकल्पनमर्थापत्तिरित्युच्यते। इयञ्च दृष्टार्थापत्तिः श्रुतार्थापत्तिरिति द्विधा। तत्राऽद्या यथा—देवदत्तनिष्ठं दिने भोजनराहित्यं पीनत्वञ्च प्रत्यक्षदृष्टं स्वोपपादकं रात्रिभोजनं कल्पयतीति। द्वितीया तु—विश्वजिद्यागकरणकभावनाविषयकप्रवर्तना विधिप्रमिता इष्टोद्देश्यकत्वं विनाऽनुपपद्यमाना स्वर्गोद्देश्यकत्वं कल्पयति। अत्र दिनभोजनाभावविशिष्टपीनत्वज्ञानं न दृष्टार्थापत्तौ कारणम्, येनाऽनुमानान्तर्भावः शङ्क्येत। किन्तु भोजनाभावपीनत्वयोस्सामानाधिकरण्यरूपसंबन्धानुपपत्तिज्ञानम्। तेन नाऽनुमानान्तर्भावः।

**प्राभाकरमते**—उपमानप्रमाणे नाऽनयोर्मतयोर्भेदः परिदृश्यते। अर्थापत्तौ तु येयं श्रुतार्थापत्तिर्भाट्टानामभिमता,ताममी नाऽनुमन्यन्ते। अपरिपूर्णस्य वाक्यस्याऽन्वयसिद्धये यत्र शब्दोऽध्याह्रियते तत्र श्रुतार्थापत्तिरिति स्थितिः। यथा 'द्वारं द्वारं' इत्यस्मिन्वाक्येऽन्वयसिध्यर्थं 'पिधेही' ति पदमध्याह्रियते। सेयं शब्दकल्पनरूपा श्रुतार्थापत्तिर्भाट्टानामभिमता।

अत्र प्राभाकरास्तु—आवरणाद्यर्थस्यैवाऽत्र कल्पनीयतया शब्दकल्पनाभावात् श्रुतार्थापत्तिर्न सिध्यतीत्यभिप्रयन्ति ।

## अनुपलब्धिः

कुमारिलमते—अर्थापत्तिपर्यन्तानि पञ्च प्रमाणानि भावमात्रगोचराणि नाऽभावग्रहणे व्याप्रियन्ते । तस्मादभावग्राहकम् अभाव इति अनुपलब्धिरिति च कथ्यमानं स्वतन्त्रमेव षष्ठं प्रमाणमित्यातिष्ठन्ते भाट्टाः । एवं प्रमाणषट्त्वे वाल्मीकिवचनमप्युष्टम्भकं भाट्टानाम्—

'राम षड्युक्तयो लोके याभिस्सर्वोऽनुदृश्यत' इति ।

( वाल्मी. अर. ७२. २ )

प्राभाकरमते—अभावानामधिकरणात्मकत्वात् तद्ग्राहकप्रमाणस्यानपेक्षितत्वादनुपलब्धेः प्रमाणान्तरत्वं नाङ्गीक्रियते प्राभाकरैः ।

इति भाट्टप्राभाकरमतयोः प्रमाणनिरूपणम् ।

---

## प्रमेयेषु कौमारिलं मतम्, द्रव्यनिरूपणञ्च

**कुमारिलमते**—एवं तावन्मतभेदेन प्रमाणानि प्रदर्शितानि । अथेदानीं प्रमेयविषये कियान्भेद इति समालोचयामः—द्रव्यगुणकर्मसामान्यशक्त्या भावभेदेन पदार्थः षड्विधः । तत्र परिमाणगुणाधारत्वं द्रव्यस्य लक्षणम् । तच्च पृथिवी सलिलं, तेजः, पवनः, तमः, व्योम, कालः, दिक्, आत्मा, मनः, शब्द इत्येकादशविधम् । तत्र पृथिव्यप्तेजसां प्रत्यक्षत्वे न विवादः । परन्त्वत्र तार्किकैः एतदारम्भकतयाऽनुमेयाः परमाणवोऽङ्गीक्रियन्ते, भाट्टास्तु जालसूर्यमरीचिषु दृश्यमानानणून् विहाय परमाणून् नाऽभ्युगच्छन्तीति विशेषः ।

वायुरनुमेय इति परैरङ्गीक्रियते । एतन्मते स्पार्शनप्रत्यक्षस्सः । अयमेषामभिसन्धिः—कृष्णो घटः, पीतो घटः, श्वेतो घटः' इतिवत्, 'शीतो वायुरुष्णो वायुरनुष्णाशीतो वायु' रिति वायुद्रव्यस्यैकस्य प्रत्यभिज्ञायमानत्वात् त्वगिन्द्रियप्रत्यक्षो वायुरिति । आलोकाभावस्तम इति न्यायमतम् । अत्र प्रतीयमानयोः गुणकर्मणोः विना बाधकं प्रतिक्षेपायोगात् तदपि स्वयं द्रव्यमित्यमी मन्यते ।

आकाशकालदिशोऽप्यत्र प्रत्यक्षाः । यदि दिक्कलाकाशा न प्रत्यक्षाः, तर्हि तेषां स्वरूपमेव हीयेत, प्रत्यक्षव्यतिरेकेण तेषु प्रमाणाभावात् । त्रीण्यपीमानि द्रव्याणि नित्यानि विभूनि च । तत्राऽऽकाशो विभुरपि घटाद्युपाधिवशात् घटाकाशादिव्यपदेशं लभते । कालो विभुरपि 'पञ्चदशनिमेषाः काष्ठा' इत्याद्युपाधिवशादौपाधिकं भेदव्यवहारं भजते । एवं दिशोऽपि पूर्वापराद्युपाधिवशाद्भेदव्यवहारः ।

चैतन्याश्रय आत्मा । 'स मानसीन आत्मा जनाना' मित्यादिश्रुत्या स मानसप्रत्यक्षविषयः । अत्र जीवात्मा परमात्मेत्यात्मानं विभज्य तत्र परमात्मा ईश्वर इति नैयायिकादयो मन्यन्ते । तादृशेश्वरे प्रमाणं प्रत्यनुयुक्ता अनुमानमुपन्यस्यन्ति—क्षित्यङ्कुरादिकं सकर्तृकं, कार्यत्वाद्घटवदिति । एवमनुमिमानाश्च तन्तुवाय इव पटं परमेश्वरो निखिलमपि जगत् सृष्टिसमये द्व्यणुकादिक्रमेण विरचयति, कविरिव काव्यमखिलमपि वेदराशिमारचयति, संहारकाले पुनः बालक इव घटं जगद्विनाशयतीति प्रतिपादयन्ति ।

भाट्टाः पुनः—सर्वमिदं सृष्टिप्रलयादिकं पौरुषेयत्वञ्च वेदस्य निवर्तयितुं, अपौरुषेयत्वञ्च तस्य स्थापयितुं तादृशस्य सर्वज्ञपुरुषस्येश्वराभिधानस्य सद्भावाय द्रुह्यन्त इव तार्किकाणामनुमानं तीव्रेणाऽऽग्रहेण शतधा खण्डयन्ति। अत एव जगति मीमांसकानां निरीश्वरवादप्रथा। तत्वतस्तु विचार्यमाणे नाऽस्ति कश्चिन्मीमांसकः, यस्तार्किकान् खण्डयन् सकलजगन्नेतारं परमपुरुषमसन्तमभिप्रैति। वार्तिकप्रभृत्यद्यपर्यन्तं ये ग्रन्थास्समुपलभ्यन्ते तेषु सर्वेष्वपि ईश्वरनमस्कारात्मकं मङ्गलं तैस्तैः कृतमुपालभामहे। वार्तिककारैरपि 'विशुद्धज्ञानदेहाये' त्यदिना ग्रन्थादौ महादेवो नमस्कृतः। पद्यमिदं कर्मपरत्वेन व्याचक्षाणानां मतं 'तेषामीश्वरद्रोहिणां प्रतीयमानार्थपरित्यागेनाऽर्थान्तरं कल्पयतामनुपादेयमेव तद्व्याख्यानम्' इत्यादिना युक्तिस्नेहप्रपूरणीकारैः शास्त्रदीपिकाव्याख्यातृभिर्निराकृतम्। अतएव नावमिकदेवताधिकरणस्य कर्माङ्गभूतदेवताया एव विग्रहादिकं नाऽस्ति, उपासनादौ तु तदस्तीत्येव तात्पर्यं वर्णयन्ति केचन।

मनश्चैतन्मते अणुपरिमाणम्, न परममहत्परिमाणम्। नारायणपण्डितस्तु मनसो विभुत्वं स्वीकृत्य तत्राऽनुमानमेवं प्रदर्शयति—मनो विभु स्पर्शानर्हद्रव्यत्वात् ज्ञानासमवायिकारणसंयोगाधारत्वाद्वा, आत्मवदिति। एवमनुमानेनाऽस्य विभुत्वे सिद्धेऽपि कर्णशष्कुल्यवच्छिन्नस्यैव गगनस्य यथेन्द्रियभावमातिष्ठन्ते नैयायिकाः, तथा देहावच्छिन्नस्यैव मनस इन्द्रियत्वं स्वीकार्यम्। न चैवं सति चाक्षुषादिप्रत्यक्षावसरे घ्राणादिप्रत्यक्षं स्यादिति शङ्कनीयम्, तत्र चाक्षुषसामग्र्याः प्रतिबन्धकत्वकल्पनेन दोषाभावात्। अतो विभुत्वेऽपि मनसो न काचिदनुपपत्तिरित्याशयः।

शब्दश्च गगनगुण इति परमतम्। कुमारिलमते तु श्रोत्रेन्द्रियग्राह्यशब्दत्वजातिमान् नित्यस्सर्वगतश्शब्दो द्रव्यं मनः। स पुनरयं शब्दो वचाकावाचकभेदेन द्विविधः। तत्राऽवाचको भेरीप्रहरणजन्यध्वनिव्यङ्ग्यः। वाचकस्तु ताल्वादिव्यापारजन्यध्वनिव्यङ्ग्यो वर्णात्मकः। वर्णात्मकानां शब्दानां सम्भूयैकत्ववाचिनां समाहारं पदमिति वदन्ति कौमारिलाः। एतादृशपदस्य पदार्थेन सह प्रात्याय्यप्रत्यायकभावलक्षणस्सम्बन्धोऽपि नित्य एव। तत्सिद्धमेकादशं द्रव्यम्।

**प्राभाकरमते**—द्रव्यं, गुणः, कर्म, जातिः, शक्तिः, सादृश्यं, संख्या, समवाय इत्याष्टौ पदार्थाः। द्रव्येष्वमी वायोरनुमेयत्वमभ्युपगच्छन्ति।

तमो न द्रव्यम् । आलोकदर्शने सति ग्राहकभूतात्मस्वरूपोपलम्भात्सामान्यतो नीलद्रव्यस्मरणे सति स्मृतित्वमगृह्णतस्तयोर्भेदाग्रहनिबन्धनस्तमोनैल्यव्यवहार इत्यमी वदन्ति ।

आकाशादि पूर्ववन्न प्रत्यक्षविषयम्, किन्त्वनुमेयमेव । एतन्मते चैतन्याश्रय आत्मा अहं प्रत्ययवेद्यः, न पूर्ववन्मानसप्रत्यक्षविषयः । तत्र अहं जानामीति सर्वार्थवित्तिषु व्यवहारदर्शनादात्मज्ञानयोरप्यप्रकाशमानत्वे तदनुपपत्तेस्तयोः कर्तृतया वित्तितया च प्रतीयमानत्वमभ्युपगच्छन्ति । मनसः पूर्ववदणुत्वम, शब्दश्चाऽऽकाशगुणः न द्रव्यमिति नैयायिकानामिव नव द्रव्याण्येव प्राभाकराणामभिमतानि ।

## गुणनिरूपणम्

**कुमारिलमते**—रूपरसगन्धस्पर्शसंख्यापरिमाणसंयोगविभागपरत्वापरत्वद्रवत्वगुरुत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषसंस्कारध्वनिप्राकट्यभेदादेकविंशतिविधो गुणः । तत्र नीलादिरूपव्यक्तिरेकैव । 'एकविंशतिर्गुणाः' इत्यबाधितव्यवहारानुरोधेन 'गुणे गुणानङ्गीकारः' इति नियममनाद्रियमाणा इमे संख्याया अद्रव्यवृत्तितामप्यनुमन्यन्ते । नित्योऽपि संयोग एषां सम्मतः ।

**प्राभाकरमते**—गुणाश्च पूर्ववदेव । परन्तु पूर्ववत्संख्याया अमी गुणत्वं नाऽभ्युपगच्छन्ति, अपि तर्हि पदार्थान्तरत्वम् ।

संयोगश्च त्रिविधः अन्यन्तरकर्मजः, उभयकर्मजः, संयोगजश्चेति । नित्यसंयोगश्च पूर्ववदेभिर्नाऽङ्गीक्रियते ।

## ज्ञानस्वरूपम्

**कुमारिलमते**—बुद्धिर्ज्ञानम् । तदिदमेतन्मतेऽनुमेयम् । अवैदिका निरालम्बनवादिनो योगाचारादयस्सर्वस्य ज्ञानाकारतां वदन्तो बाह्यार्थानपलपितुं प्रवृत्ताः । तत्प्रतिसमाधातुं ज्ञानस्याऽप्रत्यक्षताममी साधयन्ति । ज्ञानमिदं क्वचिदुत्पद्यमानं समयान्तरे बाधितं सद्भ्रान्तिरूपं भवति । क्वचित्तु यथाव द्ग्राह्यं वस्तु गृहीत्वा कालत्रयेऽप्यबाधितं भवति । तत्राऽऽदिममप्रमाणम्, अन्तिमञ्च प्रमाणमिति व्यवह्रियते । किन्तत्प्रामाण्यमिति

चेत्—अगृहीतग्राहित्वे सति अबाधितविषयत्वमेव । गृहीतविषयत्वान्न स्मृतिः प्रमाणम्, बाधितविषयत्वाच्च न भ्रान्तिः प्रमाणम् ।

एतत्प्रामाण्यं प्रत्युच्चावचो विवादः—प्रामाण्यमप्रामाण्यञ्चेत्युभयं स्वत इति सांख्याः । अप्रमाण्यं स्वतः प्रामाण्यं परत इति बौद्धाः । उभयमपि परत इति नैयायिकाः । स्वतः प्रामाण्यमुत्पद्यते परतस्त्वप्रामाण्यमिति मीमांसकाः । एवञ्च सति नित्यवेदवाक्यजनितज्ञानस्य चिरमन्वेषणेऽपि पुरुषसम्बन्धिभ्रमप्रमादाशक्तिविप्रलिप्सादोषसंस्पर्शाभावादनपवादं स्वतस्सिद्धं प्रामाण्यं स्थिरीकृतं भवति ।

ध्वनिस्तु वायुगुणश्शब्दाभिव्यञ्जकः । प्राकट्यं नाम विषयव्यवस्थापकस्सर्वद्रव्यवर्ती सामान्यगुणः ।

**प्रभाकरमते**—ज्ञानविषये महान् भेदः परिदृश्यते । ज्ञानमेतन्मते स्वयं प्रकाशामद्वैतिनामिव । तच्च यथार्थायथार्थभेदेन द्विविधमिति पूर्वं निरूपितम् । अयथार्थज्ञानं भ्रमात्मकमिमे नेच्छन्ति ।

न कदाचित्काचित् ज्ञानव्यक्तिरयथार्थभूता भवति । भ्रान्तिव्यवहारस्तु भेदाग्रहनिबन्धनः । अस्याऽयमर्थः—कश्चिच्छुक्तिं प्रत्यक्षमीक्षते । तत्र स्फुरितं रजतसादृश्यं फालफल्यरूपं शुक्तेराकारं तिरोदधाति । स्मारयति च रजतम् । तदा च शुक्तिरजतयोर्भेदो न गृह्यत इति तदानीन्तनं ज्ञानं भ्रान्तिरित्युच्यते । वस्तुतस्तु न तदानीमेकमेव ज्ञानम्, अपि तु द्वे ज्ञाने । एकं 'इदमि'ति प्रत्यक्षात्मकम्, अपरं 'रजत' मिति स्मरणात्मकम् । तत्र प्रत्यक्षं शुक्तिविषयकं नाऽयथार्थम् । स्मरणमपि रजतविषयकं नाऽयथार्थमिति कस्येदानीमयथार्थत्वमिति गुरुमतावलम्बिनामभिप्रायः । एतावान्प्रयासः वेदवाक्यजन्यबोधस्य प्रमाण्यस्वतस्त्वस्याऽऽप्रामाण्यशङ्कालेशविनिर्मोकेन निर्वाहायेति प्रतिभाति ।

## कर्म

**कुमारिलमते**—अविभुद्रव्यमात्रवृत्ति चलनात्मकं संयोगविभागयोर्मूलं कर्म प्रत्यक्षम् । तच्चोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात्पञ्चविधमेव

## सामान्यम्

जातिषु सत्ताया द्रव्यगुणकर्मत्रितयमात्रवृत्तित्वं नैयायिका आचक्षते। मीमांसकाः पुनर्जातिगतामपि तां मन्यन्त इति विशेषः।

## अभावपरिच्छेदः

अनुपलब्धिप्रमाणगम्योऽभावो द्विविधः—संसर्गाभावोऽन्योन्याभावश्च। तत्र संसर्गाभावः प्रागभावप्रध्वंसाभावात्यन्ताभावभेदेन त्रिविधः। अत्राऽयं सङ्ग्रहश्लोकः—

'क्षीरे यो दध्यभावः स इह निगदितः प्रागभावः प्रवीणैः
प्रध्वंसाभावमाहुर्दधनि तु पयसोऽभावमाचार्यपादाः।
अत्यन्ताभावसंज्ञो भवति हि पवनाद्येषु रूपाद्यभाव-
श्चाऽन्योन्याभावमाशु स्फुटयति तु घटादौ पटाद्यभावः' ।। इति।

प्रभाकरमते—कर्मणोऽनुमेयत्वम्, न पूर्ववत्प्रत्यक्षविषयत्वमिति भेदः।

जातिष्वमी द्रव्यगुणकर्मवृत्तिसत्ताख्यां जातिं नाऽनुमन्यन्ते। ब्राह्मणत्वादिजातिर्भाट्टानामभिमता, नैते तामङ्गीकुर्वन्तीति विशेषः।

एवं शक्तिः सादृश्यं संख्या समवाय इति चतुर्णां पृथक्पदार्थत्वमनुमन्यन्ते प्राभाकाराः।

इतिभाट्ट प्राभाकरमतयोः प्रमेयनिरूपणम्

---

## भाट्टप्रभाकरमतभेदनिष्कर्षपट्टिका—

| भाट्टमतम् | प्राभाकरमतम् |
|---|---|
| प्रथमेऽध्याये—धर्मप्रमाणनिरूपणम्। | विधिवाक्यप्रामाण्यनिरूपणम्। |
| द्वितीये—कर्मभेदः | शाखभेदः। |
| तृतीये—शेषशेषिभावः। तत्र प्रकरणं द्विविधम्–महाप्रकरणवान्तरप्रकरणञ्चेति। | शेषशेषिभावः। अवान्तरप्रकरणं नाऽस्ति। |
| चतुर्थे—प्रयोज्यप्रयोजकभावः। | उपादानाख्यप्रमाणगम्यं शेषत्वप्रयुक्त्यधिकारोत्पत्त्याख्यं चतुष्टयं विषयः। |
| पञ्चमे—अनुष्ठानक्रमः, स च विधेयः। | अनुष्ठानक्रमः, स न विधेयः। |
| षष्ठे—अधिकारनिरूपणम्। | तथा. |
| सप्तमे—सामान्यातिदेशः। | तथा. |
| अष्टमे—विशेषातिदेशः। | तथा. |
| नवमे—ऊहः | तथा. |
| दशमे—बाधः, तत्र बाध्यं पदार्थमतिदेशो विकृतौ प्रकृतितः नैवाऽऽनयति। | बाधः, बाध्यं पदार्थं प्रकृतितश्चोदको विकृतावानयति। |
| एकादशे—तन्त्रम्। | तथा. |
| द्वादशे—प्रसङ्गः | तथा. |
| प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि | प्रत्यक्षानुमानशब्दोपमानर्थापत्त्याख्यानि पञ्च प्रमाणानि। |
| संयोगस्संयुक्ततादात्म्यं संयुक्ततादात्म्यतादात्म्यञ्चेति त्रयस्सन्निकर्षाः। | संयोगस्संयुक्तसमवायस्समवायश्चेति त्रयस्सन्निकर्षाः। |
| चक्षुर्घ्राणरसनत्वक्छ्रोत्रमनांसि षडिन्द्रियाणि। | तथा. |
| अभिहितान्वयवादः। | अन्विताभिधानवादः। |
| शब्दो द्विविधः। तत्र वेदशब्दो लौकिकशब्दश्चेत्युभयं प्रमाणम्। | शब्दो द्विविधः। एकस्य पृथक्प्रामाण्यमपरस्याऽनुमानत्वम्। |

| | |
|---|---|
| दशलकारसाधारणस्याऽऽख्यातस्याऽर्थीभावना अर्थः। | लिङ्स्थल एव केवलमाख्यातस्य आर्थी भवना अर्थः। |
| शब्दनिष्ठः कश्चनाऽलौकिको व्यापारविशेषो लिङर्थः। | नियोगो लिङर्थः। |
| दृष्टश्रुतभेदेनाऽर्थापत्तिः द्विधा। | श्रुतार्थापत्तिर्नाऽस्ति। |
| द्रव्यगुणकर्मसामान्यशक्त्यभावभेदेन षड्विधः पदार्थः। | द्रव्यगुणकर्मसामान्यशक्तिसादृश्यसंख्यासमवायभेदेनाष्टविधः पदार्थः। |
| पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनश्शब्दतमांसि द्रव्याण्येकादश। | पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणि। |
| वायुः स्पार्शनप्रत्यक्षः। | वायुरनुमेयः। |
| आकाशकालदिशां प्रत्यक्षत्वम्। | आकाशकालदिशामनुमेयत्वम्। |
| आत्मा मानसप्रत्यक्षविषयः। | आत्मा अहं प्रत्ययगम्यः |
| मनसोऽणुत्वम्। | तथा |
| शब्दो द्रव्यम्। | शब्दश्चाकाशगुणः। |
| तमो द्रव्यम्। | तमो नाऽस्त्येव। |
| रूपरसगन्धस्पर्शसंख्यापरिमाणसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषसंस्कारध्वनिप्राकट्यभेदादेकविंशतिविधो गुणः। | संख्यायाश्शक्तेश्च न गुणत्वमपि तु पृथक्पदार्थान्तरत्वम्। अन्यत्सर्वं पूर्ववत्। |
| ज्ञानमनुमेयम्। | ज्ञानं स्वयंप्रकाशम्। |
| अन्यथाख्यातिवादः। | अख्यातिवादः। |
| कर्म प्रत्यक्षम्। | कर्माऽनुमेयम्। |
| परापररूपं द्विविधं सामान्यम्। | परसामान्यं नाऽस्ति। |
| ब्राह्मणत्वादिजातिरस्ति। | ब्राह्मणत्वादिजातिर्नाऽस्ति। |
| प्रागभावप्रध्वंसाभावात्यन्ताभावान्योन्याभावभेदेनाऽभावश्चतुर्विधः॥ | अभावो न पदार्थान्तरम्, किन्त्वधिकरणात्मक एव॥ |

## तन्त्रसिद्धान्तरत्नावल्युद्धृतवाक्यानामाकरसूची

## सङ्क्षिप्तशब्दविवरणम्

| | | | |
|---|---|---|---|
| आप० ध० | आपस्तम्बधर्मसूत्रम् | पा० सू० | पाणिनीयसूत्रम् |
| आप० श्रौ० | आपस्तम्बश्रौतसूत्रम् | प्र० पं० | प्रकरणपञ्चिका |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् | बृ० उ० | बृहदारण्यकोपनिषत् |
| कठ० | कठोपनिषत् | बौ० ध० | बौधायनधर्मसूत्रम् |
| कपि० सं० | कपिष्ठलसंहिता | ब्र० उ० | ब्रह्मबिन्दूपनिषत् |
| का० वा० | कात्यायनवार्तिकम् | भ० गी० | भगवद्गीता |
| का० श्रौ० | कात्यायनश्रौतसूत्रम् | भा० र० | भाट्टरहस्यम् |
| का० सं० | काठकसंहिता | मान० | मानमेयोदयः |
| कु० वृ० | कुतूहलवृत्तिः | मै० सं० | मैत्रायणीयसंहिता |
| गौ० ध० | गौतमधर्मसूत्रम् | ला० श्रौ० | लाटचायनश्रौतसूत्रम् |
| छा० उ० | छान्दोग्योपनिषत् | वाल्मी० कि० | वाल्मीकीयरामायणे किष्किन्धाकाण्डम् |
| जै० न्या० | जैमिनीयन्यायमाला | श० ब्रा० | शतपथब्राह्मणम् |
| जै० सू० | जैमिनीयसूत्रम् | शा० दी० | शास्त्रदीपिका |
| तं० वा० | तन्त्रवार्तिकम् | शा० भा० | शाबरभाष्यम् |
| ता० ब्रा० | ताण्डचमहाब्राह्मणम् | शां० ब्रा० | शाङ्खायनब्राह्मणम् |
| तै० आ० | तैत्तिरीयारण्यकम् | शां० भा० | शाङ्करभाष्यम् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् | श्लो० वा० | श्लोकवार्तिकम् |
| तै० सं० | तैत्तिरीयसंहिता | श्वेता० | श्वेताश्वतरोपनिषत् |
| न्या० कुसु० | न्यायकुसुमाञ्जलिः | स० कौ० | सर्वदर्शनकौमुदी |
| न्या० र० | न्यायरत्नमाला | सा० सं० | सामवेदसंहिता |
| न्या० सि० | न्यायसिद्धाञ्जनम् | षड्विं० | षड्विंशब्राह्मणम् |
| न्या० सु० | न्यायसुधा | | |

---

## त्रुटिपूरणम्

७७ पृष्ठे पञ्चमपङ्क्तौ 'इति' इत्येतदनन्तरं "पूर्वपक्षसूत्र उक्त्वा कर्मापेक्षादपूर्वापेक्षाद्वा यथातथाऽस्तु, ईश्वरात्फलमिति सिद्धान्तः इति सिद्धान्तसूत्रे कथयद्भिरपूर्वस्याऽभ्युपगमात्" इति पूरणीयम् ।